लोकप्रियशास्त्रीयग्रन्थमाला - ४

# ध्वनिमीमांसा

( ध्वनिविरोधिसिद्धान्तपरिशीलनसन्दर्भे )

प्रधानसम्पादकः

**प्रो. राधावल्लभत्रिपाठी**

कुलपतिः

लेखकः

**प्रो. रमेशकुमारपाण्डेयः**

आचार्यः अध्यक्षश्च

शोधप्रकाशनविभागः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

योऽनूचानः स नो महान्।

राष्ट्रियसंस्कृतसंस्थानम्

## राष्ट्रियसंस्कृतसंस्थानम्

**मानितविश्वविद्यालयः**

नवदेहली

# पुरोवाक्

राष्ट्रियसंस्कृतसंस्थानस्य लोकप्रियशास्त्रीयग्रन्थमालान्तर्गतं 'ध्वनिमीमांसा' इति ग्रन्थं प्रकाश्य पाठकानां करकमलयोः समर्पयन्नहममन्दमानन्दमनुभवामि।

अनाद्यनेहसो मानवो न बाह्यस्वरूपमात्रं विज्ञाय तृप्यति, प्रयतते चायं हस्तगतमपि बहुधा परीक्ष्य तन्निगूढतरं निगूढतमं वा रहस्यमधिगन्तुम्। काव्यरचनारुणोदयादेव काव्यमर्मज्ञास्तादात्मावधारणे तत्परीक्षणनिकषसहकारेण बद्धपरिकरा इवाभूवन्, अलभन्त च ते यथामेधाप्रसरं स्वरूपाभिनिवेशवशं-वदतया तत्प्रतिफलितमात्मत्वेनाधार्यं रहस्यम्। तद्दिशि नवमशताब्द्यां लब्धजनुषामानन्दवर्धनाचार्याणां ध्वन्यात्मवादः तत्पूर्वस्थापितसिद्धान्तानतिशय्यैव राजते। तत्परवर्तिभिर्यथानुरूपमङ्गीकृत्य तच्चिन्तनपरम्परा स्वमनीषाव्यापारेण सम्पोषिता। काव्यस्य सर्वाङ्गीणतया समीक्षणं विदधद्भिः समीक्षण-विचक्षणाचार्यैर्ध्वनेरात्मत्वं समुद्घोषितम्। ध्वनिप्रस्थानप्रमुखाचार्याणाम्मतमिदं व्यञ्जनाव्यापारमाश्रितं परिलक्ष्य व्यञ्जनाप्रत्याख्यानपरायणाः काव्य-शास्त्रविमर्शकाः केचन सुधियः ध्वनिविरोधिमतं प्रकाशितवन्तः स्व-स्वग्रन्थरत्नमाध्यमेन। ध्वनिविरोधिनां मूलतो व्यञ्जनाविरोध एव महान् प्रयत्नः परिलक्ष्यते। समेऽप्येते विचारकाः काव्यस्य सारभूते रसे विमतिं नैव प्रदर्शयन्ति, किन्तु आनन्दवर्धनस्य ध्वनिसिद्धान्तं दृष्टिभेदेनैव विमृशन्ति दोषजातञ्चोपक्षिपन्ति। तेषु मुकुलभट्टमहिमभट्टादयः सन्ति मुख्याः। अभिधावृत्तमातृकाकारो मुकुलभट्टः ध्वनेः ध्वनिकारस्य वा समुल्लेखं विनैव अभिधामात्रं स्वीकृत्य सर्वं काव्यसर्वस्वं तेनैव व्यापारेण बोधयितुं यतते। तत्र तेन मुख्यामुख्यभेदेन अभिधां द्विधा विभज्य अमुख्यव्यापारनाम्ना लक्षणाऽप्यङ्गीकृता। वस्तुतः शब्दव्यापारविचारे मुकुलभट्टस्य विलक्षण-मवदानमस्ति । मम्मटोऽपि तस्य मतं बहुधा पूर्वपक्षरूपेणोपस्थापयति

स्वकाव्यप्रकाशे। व्यञ्जनां सर्वथा अनुमानेऽन्तर्भावयितुं कृतसङ्कल्पो महिमभट्टस्तु ध्वनिसिद्धान्तं समीक्षते परीक्षते च प्रतिपदं ध्वनिलक्षणमानन्दवर्धनस्य । स प्रतिपादयति यद् मुख्यव्यापार एव शब्दव्यापारः, अन्यः सर्वोऽपि व्यापार आर्थ एव, नास्ति कापि प्रतीयमानार्थप्रतिपादनपरा व्यञ्जना शक्तिः, अपितु अनुमित्यैव सम्पूर्णोऽप्यर्थसन्दोहः समनुभूयते तत्त्वज्ञैरिति। स्वग्रन्थस्य व्यक्तिविवेकेत्याख्यायामपि व्यञ्जनाविचार एव तस्याभिमत इति केचन व्याचक्षते। नहि रसात्मनि कस्यचिद् विरोध इति स स्वयमेवाभिधत्ते। ध्वनिसिद्धान्तं सर्वथाऽपलपितुं स ध्वनिलक्षणे मुख्यतो दश दोषान् निर्दिशति। एवमेव व्यापारान्तरेण प्रतीयमानार्थं प्रतिपादयन्तः कुन्तकप्रभृतयो यथावसरमिह समीक्षिता विद्यन्ते। अथ 'तात्पर्यमेव वचसि ध्वनिरेव काव्ये' इत्युपन्यासपुरस्सरं तात्पर्यवादस्य तात्पर्यं विशदयन् भोजराजोऽपि शृङ्गारप्रकाशे सरस्वतीकण्ठाभरणे च ध्वनितत्त्वं वस्तुतो न समर्थयति। ध्वनिविषये यायावरीयराजशेखरोऽपि स्वीयं विचारसारं प्रस्तौति इत्थं ध्वनिविमर्शस्य वैविध्यमयी कापि परम्पराऽलङ्कारशास्त्रे प्रसृता।

अथ ध्वनिध्वंसधिया शास्त्रविचारप्रवृत्तानां सर्वेषामाचार्याणां मतमाकलय्य तद्विरोधभावभरिततर्काणामाशयं परिशील्य ध्वनिपक्षतः सदुक्तिभिः समाधान-ततिमाविष्कर्तुमिवोन्नीतोऽयं ग्रन्थः डॉ. रमेशकुमारपाण्डेयेन सन्दृब्धः। तत्र तत्र प्रसङ्गेषु विद्यमानस्य ध्वनेः मीमांसयाऽस्योपस्थापनस्य ध्वनिमीमांसेति नामकरणमुचितमेव प्रतिभाति। अतोऽहं विदुषां छात्राणाञ्च कृते सर्वथोपकारावहस्य ग्रन्थस्यास्य प्रबन्धारं प्रकाशनविभागस्याधिकारिणश्च स्वशुभाशीराशिभिरभिनन्दयन् विरमामि विस्तरात्।

**राधावल्लभत्रिपाठी**

कुलपतिः, राष्ट्रियसंस्कृतसंस्थानम्

# भूमिका

**यदपि तदपि रम्यं यत्र लोकस्य किञ्चित्**
**स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते।**
**अनुमतमपि पूर्वच्छायया वस्तु तादृक्**
**सुकविरुपनिबध्नन् निन्द्यतां नैव याति।।**

**प्रतायन्तां वाचो निमितविविधार्थामृतरसा**
**न वादः कर्तव्यः कविभिरनवद्ये स्वविषये।**
**परस्वादानेच्छाविरतमनसो वस्तु सुकवेः**
**सरस्वत्येवैषा घटयति यथेष्टं भगवती।।**

काव्ये सारभूतं तत्त्वं किमिति जिज्ञासमानाः समीक्षकाः काव्यं सूक्ष्मातिसूक्ष्मं परिशीलयन्ति स्थापयन्ति च स्वसिद्धान्तान्। मुनिना भरतेन नाट्यस्य प्रमुखं तत्त्वं समुद्घोषयता प्रोक्तं यत्- नहि रसादृते कश्चिदर्थः प्रवर्तते इति। तदुत्तरवर्त्तिना भामहेन निर्भूषं कान्तमपि वनिताननमिवालङ्कारहीनं काव्यं कथमपि न शोभत इत्यभाणि। भामहस्य सिद्धान्तं परिपोषयन्तो दण्डि-रुद्रटोद्भट्टादय आलङ्कारिकाः काव्येऽलङ्कारमेव सारभूतत्वेन समुद्घोषितवन्तः। गुणवादी वामनस्तु रीतिमेव काव्यात्मत्वेन प्रख्यापितवान्। ततः परम् आनन्दवर्धनाचार्येण काव्योपस्कारकाणां सर्वेषां तत्त्वानां यथायोगं विनियोगं विदधता काव्यतत्त्वप्रकाशिकां शब्दशक्तिं समाश्रित्य अभिधालक्षणाभ्यां विलक्षणया व्यञ्जनाख्यया शब्दशक्त्या सहृदयानुभवगम्यो ध्वनिरेव काव्यात्मत्वेन सिद्धान्तितः। ध्वननात्मके प्रधानीभूते रसतत्त्वे प्रीतिं दधाना अपि केचनाचार्याः व्यञ्जनां प्रत्याख्यातवन्तः। ते समीक्षका एव ध्वनिविरोधिन इति व्यवहारः समीक्षकेषु। व्यञ्जनां प्रत्याख्याय ते स्वसिद्धान्तानुसारम् अभिधया, लक्षणया, तात्पर्यया अनुमित्या वा काव्यसर्वस्वस्य प्रकाशनं स्वीकुर्वन्ति। एतेषां ध्वनिविरोधिनां सिद्धान्तानां समीक्षणं विधाय ध्वनिसिद्धान्तस्य प्रतिपादनमेव मूलमुद्देश्यं ग्रन्थस्यास्य।

ध्वनिमीमांसाख्यस्य ग्रन्थस्यास्य प्रथमे भागे ध्वनिसिद्धान्तस्य संक्षिप्तं परिचयं प्रदाय, भामहदण्डिवामनोद्भटरुद्रटादीनां सिद्धान्तविषये किञ्चिन्निवेद्य, भाक्तवादाशक्यवक्तव्यत्ववादयोः मतं सारांशतः परिशील्य ध्वनिपरम्परायाः प्रमुखाचार्याणां विशेषत आनन्दवर्धनाभिनवगुप्तमम्मटविश्वनाथजगन्नाथानां जीवातुविषये किञ्चिन्निरूपितमस्ति। द्वितीयभागे तु मुकुलभट्ट-प्रतीहारेन्दुराज-अग्निपुराणकार-भट्टनायक-धनञ्जयधनिक-कुन्तक-महिमभट्ट-भोजराजादी-नामाचार्याणां ध्वनिविषयकविचारान् परामृश्य तैरुपस्थापितानां दोषाणां परिहारः ध्वनिसिद्धान्तदृशा समुपनिबद्धोऽस्ति। वस्तुतो ध्वनिसिद्धान्तस्य सम्यगनुशीलनेन ध्वनिविरोधिभिः समुपस्थापितानां सर्वेषां प्रश्नानां समाधानं सम्भवतीतिधिया 'ध्वनिमीमांसा' इति नामकरणं विहितम्।

अन्ते पुनः परिशिष्टरूपेण ध्वन्यालोकस्य सर्वासां कारिकाणां संस्कृत-व्याख्या प्रदत्ताऽस्ति। संस्कृतव्याख्याया आधारग्रन्थाः लोचनटीका-दीधितिटीका-सुनीलकण्ठशास्त्रिविरचितोज्जीवनीटीकाः सन्ति मुख्याः। ध्वन्यालोकस्य कारिकाव्याख्यानन्तरं ध्वन्यालोकस्य वृत्तिभागे समुपलब्धानां परिकरश्लोकानामपि संस्कृतव्याख्या प्रदत्ता अस्ति। सामान्यतः सम्पूर्णोऽयं ग्रन्थः साहित्य-शास्त्रस्याध्ययने प्रवृत्तानां छात्राणां विशेषतो ध्वनिविरोधिनामाचार्याणां सिद्धान्तानामध्ययने रुचिसम्पन्नानां छात्राणामुपकारबुद्ध्या निर्मितोऽस्ति।

राष्ट्रियसंस्कृतसंस्थानस्य गौरवमय्यां प्रकाशनयोजनायां ग्रन्थस्यास्य प्रकाशनं विधाय विद्वत्कुलोपकारं विहितवद्भ्यः प्राच्यप्रतीच्यविद्यानिष्णातेभ्यो नैकग्रन्थप्रणेतृभ्यो राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिप्रमुखेभ्यः आचार्यराधावल्लभत्रिपाठिवर्येभ्यः हार्दं कार्तज्ञ्यं विनिवेदयामि। तेषां निर्देशनस्य सद्यः सम्यक्परिपालनं विधातुं बद्धपरिकरेभ्यः वेद-वेदाङ्गनिष्णातेभ्यः कुलसचिवेभ्यः आचार्यरामानुज-देवनाथेभ्यः स्वकीयामधमर्णतां विज्ञाप्य विरमामि विस्तरात्।

विजया दशमी<br>
( २०६७ वि.स. )<br>
१७.१०.२०१०

विदुषां वशंवदः<br>
**रमेशकुमारपाण्डेयः**

# सङ्केताक्षरसूची

| | |
|---|---|
| अ. पु. | अग्निपुराणम् |
| अ. भा. | अभिनवभारती |
| अ. वृ. मा. | अभिधावृत्तमात्रिका |
| काव्यप्र. | काव्यप्रकाशः |
| काव्या. भामहः | काव्यालङ्कारः, भामहः |
| काव्या. सू. | काव्यलङ्कारसूत्राणि, वामनः |
| काव्या. रुद्रटः | काव्यालङ्कारः, रुद्रटः |
| का. ल. सा. सं. | काव्यालङ्कारसारसंग्रहः |
| टी. | टीका |
| त. लो. | तन्त्रालोकः |
| द. रू. | दशरूपकम् |
| ध्व. | ध्वन्यालोकः |
| ध्व. लो. | ध्वन्यालोकलोचनम् |
| ना. शा. | नाट्यशास्त्रम् |
| पृ. | पृष्ठः |
| रस. | रसगङ्गाधरः |
| राजत. | राजतरङ्गिणी |
| ल. वृ. | लघुवृत्तिः |
| व. जी. | वक्रोक्तिजीवितम् |

| | |
|---|---|
| वा. प. | वाक्यपदीयम् |
| वृ. | वृत्तिः |
| व्य. वि. | व्यक्तिविवेकः |
| शृ. प्र. | शृङ्गारप्रकाशः |
| सं. सु. स. | संस्कृत सुकवि समीक्षा |
| साहि. | साहित्यदर्पणः |

# विषयानुक्रमणिका

## प्रथमो भागः - ध्वनिसिद्धान्तः

## द्वितीयो भागः – ध्वनिविरोधिन आचार्याः तेषां च सिद्धान्ताः

## प्रथमो भागः

# ध्वनिसिद्धान्तः

**प्रवीणां या वीणां निखिलनिगमोद्गीतलसितां**
**समादाय स्वाङ्के रिरसिषति रम्यार्थकविताम्।**
**पुराणी ब्रह्माणी सकलरचनायाः परिवृढा**
**क्रियान्मे सिद्धिं सा ध्वनिनयभरे शास्त्रनिवहे॥**

शब्दार्थशरीरस्य काव्यस्य आत्मतत्त्वं किमिति जिज्ञासायां साहित्य-शास्त्रप्रस्थानप्रवर्तकेष्वाचार्येषु केचन रसम्, अन्येऽलङ्कारम्, इतरे गुणं (रीतिम्) अपरे ध्वनिम्, परे वक्रोक्तिं भिन्नाश्चौचित्यमेव प्रतिपादयन्ति। अद्यतन-समीक्षणसरणिमवलम्बमाना आचार्याः तत्तद्विच्छित्तिविशेषान् ध्वनिसिद्धान्त एवान्तर्भाव्य तस्यैव प्रामुख्यं सङ्गिरन्ते। काव्यमीमांसाकारेण राजशेखरेणापि प्रोक्तं यत्

**ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना।**
**आनन्दवर्धनः कस्य नासीदानन्दवर्धनः।। इति।**[१]

सम्प्रति साहित्ये मूर्धाभिषिक्तोऽयं ध्वनिः सर्वप्रथमम् आनन्द-वर्धनाचार्येणैव सम्प्रवर्त्तितः। तदनन्तरं तदुत्तरवर्त्तिभिरभिनवगुप्तपादमम्मट-जगन्नाथविश्वनाथादिभिः पल्लवितः पुष्पितश्च। ध्वनिसम्प्रदाये समुपलब्धेषु साहित्येषु 'ध्वन्यालोक' एव सर्वप्रथमो ग्रन्थः। तस्य कारिकां वृत्तिञ्चादाय तत्प्रणेतृविषये प्रायो विवदन्ते पण्डिताः प्राच्यपाश्चात्यसमीक्षापद्धतिमनुरुन्धानाः। अतोऽत्र प्रथमं ध्वनिसिद्धान्त एव विमृश्यते संक्षेपतः।

---

१. सं.सु.स., पृ. ५०५

लोकोत्तरवर्णनानिपुणकविकर्मरूपस्य रसादिव्यञ्जनव्यापारप्रधानस्य ललितोचितसन्निवेशचारुशब्दार्थयुगलकाव्यस्य आत्मा ध्वनिरिति ध्वनिसम्प्रदाय–प्रतिष्ठापकाचार्यस्य सिद्धान्तः।

प्रथमं ध्वनिशब्दस्य व्यवहारः पतञ्जलिभर्तृहरिप्रभृतिभिर्महावैयाकरणैः प्रधानभूतस्य स्फोटरूपार्थस्याभिव्यञ्जके शब्दे कृतः ततश्चानन्दवर्धनाभिनव–गुप्तमम्मटादिभिः काव्यतत्त्वविद्भिः प्राधानभूतस्य काव्यविशेषस्याभिव्यञ्जके शब्दे चार्थे कृतः ध्वनिशब्दस्य प्रयोगः।

**'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरभिः कथितः।।'**[१]

**'सूरिभिः कथितः' इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथञ्चित् प्रवृत्तेति प्रतिपाद्यते। प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्षेषु ध्वनिरिति व्यवहरन्ति।**

**तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिः वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः।**

तथा,

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।**

अस्मिन् ध्वनिसम्प्रदाये ध्वनिशब्दोऽयं न केवलं काव्यविशेषवाची, अपितु, पञ्चविधेष्वर्थेषु प्राप्तप्रसरोऽस्ति। तद्दृष्ट्या लोचने अभिनवगुप्तपादैः कृता व्युत्पत्तिर्द्रष्टव्या।

**ध्वनतीति ध्वनिः, व्यञ्जके शब्दे।**
**ध्वनतीति ध्वनिः, व्यञ्जकेऽर्थे।**
**ध्वन्यतेऽनेनेति ध्वनिः, व्यञ्जनाव्यापारे।**
**ध्वन्यते य इति ध्वनिः, रसादिव्यङ्ग्यार्थे।**

---

१. ध्व. १.३

**ध्वन्यतेऽस्मिन्निति ध्वनिः, काव्यविशेषे।**

अतएव साहित्यशास्त्र–परम्परायां ध्वनिशब्दव्यवहारेऽयमेवात्र विशेषो यत्–व्यञ्जकस्य शब्दार्थयुगलस्य कृते, व्यञ्जनाव्यापारस्य कृते, व्यङ्ग्यार्थस्य कृते, काव्यविशेषस्य च कृते ध्वनिशब्दस्य प्रयोगः साहित्याचार्यैः कृत इति।

अतः काव्ये सहृदयश्लाघ्यः अत्यन्तं चमत्कारकारी यः कोऽपि विलक्षण–चारुत्वसम्पन्नोऽर्थः वाच्यलक्ष्यार्थापेक्षया नितरां भिन्नः सन् प्राधान्येन प्रतिभासतेतरां सहृदयानां, स एव अङ्गनासु लावण्यमिव महाकवीनां वाणीषु सहृदयलोचनामृतकल्पः प्रतीयमानार्थः सारभूतः काव्यस्येति सिद्धान्तः ध्वनिवादिनाम्।

**योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।।**

**तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।।**
**बहुधा व्याकृतः सोऽन्यैः ततो नेह प्रतन्यते।।**

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।**

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।।**[१]

अयं हि प्रतीयमानार्थः सर्वथा वाच्याद् विलक्षणोऽस्ति। अस्य प्रतीतिः काव्यत्त्ववेदिनां हृदयेषु जायते, न जायते शब्दशासनमात्रवेदिनां हृदयेषु। वस्तुतः अस्यैव व्यङ्ग्यार्थस्य व्यञ्जकस्य च समुचितसन्निवेशः सुतरामभ्यर्हितोऽस्ति काव्ये। महाकवीनां काव्येषु व्यङ्ग्यव्यञ्जकयोः प्राधान्यात् व्यङ्ग्यव्यञ्जकभावस्य अर्थात् व्यञ्जनाव्यापारस्य प्राधान्यं स्वत एव जायते। अवश्यमेव तदर्थं वाच्यवाचकभावोऽपि समाश्रयणीयो भवति साधनत्वेन, साध्यस्तु व्यङ्ग्यार्थ एव।

---

१. ध्व. १.२–५

**आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।।**
**तदुपायतया तद्वदर्थे वाच्ये तदादृतः।।**

**यथा पदार्थद्वारेण वाच्यार्थः सम्प्रतीयते।।**
**वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः।।**

**स्वसामर्थ्यवशेनैव वाक्यार्थप्रतिपादनम्।।**
**यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते।।**

**तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।**
**बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते।।**[1]

अत एव यत्र काव्ये अर्थः आत्मानं अर्थात् स्ववीयं रूपं शब्दश्च स्वीयमर्थं गौणीकृत्य साध्यत्वेन व्यङ्ग्यार्थम् अभिव्यञ्जयतः, स एव काव्यविशेषः ध्वनिरिति ध्वनिवादिनां मतम्।

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**[2]

अयं ध्वनिर्वाच्यार्थस्य विवक्षाऽविवक्षात्वेन द्विप्रकारकः प्रदर्शितोऽस्ति १. अविवक्षितवाच्यध्वनिः, २. विवक्षितान्यपरवाच्यध्वनिश्चेतिभेदात्।

तत्राविवक्षितवाच्यध्वनिर्यत्र वाच्यार्थो विवक्षितो न भवति। अयमेव लक्षणामूल-ध्वनिरिति नामान्तरेणापि ज्ञायते। अस्य द्वौ भेदौ- १. अत्यन्त-तिरस्कृतवाच्यः, २. अर्थान्तरसङ्क्रमितश्च। विवक्षितान्यपरवाच्यध्वनौ वाच्यार्थो विवक्षितो भवति किन्तु अन्यपरत्वेन, न प्राधान्येन। अर्थात् वाच्यार्थस्य यत्र पर्यवसानं व्यङ्ग्यार्थे भवति, स ध्वनिः विवक्षितान्यपरवाच्यध्वनिस्त-स्यैवाभिधामूलध्वनिरिति नामान्तरम्। अस्मिन्नेव भेदे वस्त्वलङ्काररसादि-रूपप्रतीयमानार्थः सुतराम् अभिव्यज्यते।

अभिधामूलत्वेन स्वीकृतः प्रतीयमानार्थोऽपि द्विविधः लौकिका-

---

१. ध्व. १.११-१२
२. तत्रैव १.१३

लौकिकभेदेन। लोचने आचार्याभिनवगुप्तपादेन विवृतम् अस्ति यत्- प्रतीयमानस्य तावत् द्वौ भेदौ- लौकिकः, काव्यव्यापारैकगोचरश्चेति। लौकिकः यः स्वशब्दवाच्यतां कदाचिदधिशेते, स च विधिनिषेधाद्यनेकप्रकारो वस्तुशब्द-नोच्यते। सोऽपि द्विविधः- यः पूर्वं क्वापि वाक्यार्थे अलङ्काररूप एवान्यत्र गुणीभावाभावात्, स पूर्वम् प्रत्यभिज्ञानबलात् अलङ्कारध्वनिरिति व्यपदिश्यते ब्राह्मणश्रमणन्यायेन। तद्रूपताभावेन तूपलक्षितं वस्तुमात्रमुच्यते मात्रग्रहणे हि रूपान्तरं निराकृतम्। यस्तु स्वप्नेऽपि न स्वशब्दावाच्यः, न लौकिकव्यवहारपतितः, किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावासमुदितप्राङ्गिनविष्ट-रत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणव्यापाररसनीयरूपः रसः स च काव्यव्यापारैकगोचरः रसध्वनिः इति। स च ध्वनिरेवेति, स एव मुख्यतया आत्मा इति।"[१]

अभिव्यक्तेः क्रमेणापि ध्वनेरिदं द्वैविध्यं प्रतिपादितं भवति-१. असंलक्ष्य-क्रमव्यङ्ग्यः २. सलक्ष्यक्रमव्यङ्ग्यश्च।

यत्र प्रतीतौ विभावादीनां क्रमः सहजरूपेण न प्रतीयते अर्थात् झटित्येव रसादेः प्रतीतिर्जायते स भवति असंलक्ष्यक्रमध्वनिः। नेदं तथ्यं यत् तत्र विभावादीनां कश्चन क्रमो न भवति, अपितु अवश्यमेव तत्र क्रमः, किन्तु लाघवान्न लक्ष्यते शतपत्रपत्रशतभेदन्यायेनाकलनाविरहात्। न भवति तत्र अक्रमता अपितु क्रमस्य असंलक्ष्यतेति इदमेवास्ति वैशिष्ट्यमस्य। तत्राभिनवगुप्त-पादाचार्याणामस्ति मतं यत्- 'सातिशयानुशीलनाभ्यासात् तत्र संभाव्यमानोऽपि क्रमः सजातीयतद्विकल्पपरम्परानुदयात् अभ्यस्तविषयव्याप्तिसमस्मृतिक्रमवत् न संवेद्यते।'

यत्र च पुनः प्रतीतौ वस्तुनः अलङ्कारस्य वा ध्वनने तत्र स्थितः क्रमो निश्चितरूपेण बुद्धिपदवीमधिरोहति, स संलक्ष्यक्रमव्यङ्ग्यः। भेदोऽयम् उदाहरणमुखेन प्रतिपाद्यते।

**निरूपादानसम्भारमभित्तावेव तन्वते।।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघाय शूलिने।।**

१. ध्व. लो. १.४

प्रथमं शिवनमस्कारात्मिका वाच्यार्थप्रतीतिरत्र, तदनन्तरं व्यञ्जनाव्यापारेण उपादानसम्भारादीन् विनैव जगतः चित्राङ्कनेन भगवतः शिवस्य सर्वातिशायित्वं वैलक्षण्यञ्च सर्वचित्रकारेभ्यः प्रतीयते, इति व्यतिरेकालङ्कारध्वनिः। अत एव प्रथमं वाच्यार्थप्रतीतिः तत्रैव च अभिधायाः नियन्त्रणाद् अनन्तरम् अन्येन व्यञ्जनाव्यापारेण व्यतिरेकः प्रतीतिगोचरो भवति, व्यङ्ग्यार्थस्यायं क्रमः घण्टानादस्य अनुनाद इव परिलक्ष्यते, अत एवास्य अनुस्वानरूपव्यङ्ग्यः, अनुरणनरूपव्यङ्ग्यो वा नामान्तरम्। क्वचिद् रसादि-ध्वनेरपि संलक्ष्यक्रमताऽस्तीति केषाञ्चिन्मतम्। यथा-

**तल्पगता च सुतनुः श्वासासङ्गं न या सेहे।।**
**सम्प्रति सा हृदयगतं प्रियपाणिं मन्दमाक्षिपति।।**[१]

इत्यत्र या नववधूः पल्यङ्कशयिता श्वासस्यासङ्गमात्रेणापि सङ्कुचदङ्गलतिकाभूत्सा सम्प्रति प्रस्थानपूर्वरजन्यां प्रवत्स्यत्पतिका प्रियेण सशङ्केन समर्पितं हृदि पाणिं नववधूजातिस्वभावादाक्षिपति, परं तु मन्दम्। तस्याः सङ्कोचोऽपि सङ्कुचितोऽस्ति सम्प्रति। अत्र शनैः स्वप्रस्थानप्रापणात्मना मन्दाक्षेपेण रत्याख्यः स्थायी संलक्ष्यक्रमतया व्यज्यते।

अयं संलक्ष्यक्रमोऽपि शब्दशक्तिमूलत्वेनार्थशक्तिमूलत्वेनोभयशक्ति-मूलत्वेन च त्रिविधः। तत्र शब्दशक्तिमूलकस्य द्वौ भेदौ, वस्त्वलङ्कृतिरिति। अर्थशक्तिमूलकस्य द्वादशभेदाः। उभयशक्तिमूलकस्त्वेक एव इति पञ्चदश भेदाः सामान्येन गणिताः परवर्त्तिभिः, यद्यपि नास्त्यत्र भेदकलने मतैक्यं विदुषाम्।

शब्दशक्तिमूलत्वेऽपि अर्थस्य, अर्थशक्तिमूलत्वेऽपि शब्दस्यास्ति व्यञ्जकत्वम्, अतः उभयशक्तिमूलत्वं सर्वत्रैवास्ति, तथापि तत्र तयोर्गुण-प्रधानभावेन व्यपदेशः। यत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वं तत्रोभयशक्ति-मूलत्वम्। यथा-

**अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।।**
**तारकातरला श्यामा सानन्दं न करोति कम्।।**

१. रस. १ आनने पृ. १४

अत्र रात्रिवर्णनमेव वाच्यार्थः किन्तु अतन्द्रा, हर्षान्विता, दीपितमन्मथा, चञ्चलकनीनिका, षोडशवार्षिकी नायिका तथोक्तविशेषणविशिष्टा रजनीव कं पुरुषं नानन्दयतीत्येवंरूपस्याप्यर्थस्य प्रतीतिर्जायते। एवं रीत्यार्थद्वयप्रतीतौ स्त्रीविशेष इव रात्रिरित्युपमालङ्कारः, ज्यौत्स्नी रात्रिरिव नायिकेति वोपमालङ्कारः प्रतीयते। अत एवात्र श्यामारूपकामिनीविशेषरजन्योरुपमा व्यङ्ग्या। अत्र चन्द्रतारकातरलाश्यामाशब्दाः परिवृत्यसहिष्णवः अतन्द्रभरणसमुद्दीपित-मन्मथशब्दाश्च परिवृत्तिसहतया केषाञ्चित् तदसहतया उभयस्यापि प्राधान्येन व्यञ्जकत्वं शब्दार्थोभयशक्तिमूलत्वेनैवाङ्गीकारात्।

अन्ते पुनः व्यङ्ग्यमुखेनापि ध्वनेस्त्रैविध्यमस्ति निगदितम् आचार्यैः-

**१. वस्तुध्वनिः, २. अलङ्कारध्वनिः, ३. रसादिध्वनिश्चेति।** यद्यपि व्यङ्ग्यः सुखदः अनर्विचनीयचमत्कारकारी च भवति, किन्तु रसरूपस्य व्यङ्ग्यार्थस्यैव निरतिशयानन्दत्वेन प्राधान्यमस्ति स्फुटीकृतम् आचार्यैर्ध्वनि-वादिभिस्तत्तद्ग्रन्थेषु।

**व्यञ्जनाव्यापारः**

अलङ्कारशास्त्रे यद्यपि भामहोद्भटवामनादीनां विवेचनेषु कुत्रचित् कस्यचिदमुख्यव्यापारस्य चर्चा दृश्यते किन्तु तत्र शब्दशक्तिरूपेण कश्चिद्विषयो नास्ति समालोचितः। साहित्ये सर्वप्रथमं ध्वन्यालोके आनन्दवर्धनाचार्येण ध्वन्यार्थस्यावगमनाय शब्दस्य शक्तिं विमृशताऽन्यशास्त्रेषु पूर्वतः स्वीकृतासु शक्तिषु तस्यान्तर्भावाभावात् व्यञ्जनाख्यो नवीनः शब्दव्यापारः स्वीकृतः ततस्तन्मतानुसारिभिरन्यैरपि ध्वनिवादिभिः। शास्त्रस्याभिहितान्वयवादे-सङ्केतस्यापेक्षिणी पदार्थबोधिकाऽभिधा, तदन्यथानुपपत्तिसहाया वाक्यार्था-वबोधनशक्तिस्तात्पर्या, मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्लक्षणा चाङ्गीकृताः शब्दशक्तयः। तथैवान्विताभिधानवादेअन्वितानां पदानां समभिव्याहारादन्वितार्थबोधनविरहादभिधैव केवलं वृताऽस्ति। मीमांसकास्ते 'यत्परः शब्दः स शब्दार्थः' इति हृदये गृहीत्वा शरावदभिधाव्यापारमेव दीर्घदीर्घमिच्छन्ति।

काव्ये प्रतीयमानो योऽर्थः प्राधान्येन प्राप्तप्रसरोऽस्ति, स, सङ्केताभावान्न वाच्यार्थः, हेतुत्रितयाभावान्न च लक्ष्यार्थः अपितु एभ्योऽर्थेभ्यः सर्वथा विलक्षणः कश्चिदन्य एव, यस्य केवलं व्यञ्जनाव्यापारेणैवावबोधः सम्भवति। 'तस्मादभिधा-तात्पर्य-लक्षणा-व्यतिरिक्तश्चतुर्थोऽसौ शब्दव्यापारो ध्वनन-द्योतन-व्यञ्जन-प्रत्यायन-अवगमनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्यः' इत्यभिनव-गुप्तपादानामभिमतम्।

अत एव व्यञ्जनाव्यापारस्य नान्तर्भावो भवितुमर्हति अभिधालक्षणा-तात्पर्यादिव्यापारेषु स्वरूपभेदात् न वा स्मृत्यनुमित्योरननुभवाच्छब्दव्यापारव-त्वाच्च।

अलङ्कारशास्त्रपरम्परायां ध्वनिवादिभिराचार्यैः सिद्धान्तितं व्यञ्जनाव्यापारं नहि सकलालङ्कारिकाः स्वीकुर्वन्ति। काव्यस्य चारुत्वातिशये नास्ति कस्यापि कापि विमतिः।

अपरेऽपि आचार्याः तैर्निरूपितं रसादितत्त्वमास्वादयन्ति व्यञ्जना-व्यापारेण विनैव तत्तद्व्यापाराङ्गीकारधुरीणाः समीक्षका एवं ध्वनिमर्थात् व्यञ्जनां नाङ्गीकुर्वन्तः। अत एव 'ध्वनिविरोधिन' इति पदेन प्राप्तप्रचाराः आचार्याः साहित्यशास्त्रसमीक्षायास्ते बोधयन्ते।

**ध्वनिविरोधिनः**

साहित्यसमीक्षाक्रमे ध्वनिसिद्धान्तस्य चर्चा रसालङ्काररीतेरनन्त-रमायाति। अर्थात् रससिद्धान्तस्य प्रतिष्ठा नाट्यशास्त्रपरम्परायां पूर्णरूपेणासीत्। अलङ्कार-शास्त्रपरम्परायामपि अलङ्कारसिद्धान्तः रीतिसिद्धान्तश्च प्रतिष्ठितौ आस्ताम्। ध्वन्यालोकस्य प्राथमिकेन पद्येन ध्वनेः पूर्ववर्त्तिता ज्ञायते। यद्यपि नोपलभ्यते कश्चिदन्यो ग्रन्थः प्राक्तनः। ध्वनेः परम्परां व्याहरताऽऽचार्येण तत्र ध्वनिविरोधिमतत्रयमपि प्रत्यपादि। ज्ञायतेऽनेन यद् ध्वनिविरोधिकल्पकर्तनं ध्वनेश्च काव्यात्मतया प्रतिपादनम् एतत्प्रयोजनद्वयमेवोररीकृत्य ध्वन्यालोकग्रन्थ-रत्नस्य समुद्भूतिः।

**काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।**
**केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं**
**तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्।।**[1]

आनन्दवर्धनाचार्येणोक्तं यद् ध्वनिरयं बुधैः परम्परया प्रवर्त्तितोऽस्ति। नास्त्यत्र विप्रतिपत्तिस्थानं तथापि केचन ध्वनेरस्य अन्यथात्वं व्याहरन्ति। अत्र ध्वन्यालोके तेषां ध्वनिविरोधिनामस्ति अनाम्ना निर्देशः, तेषु सर्वप्रथम-मभाववादिनामस्ति समुल्लेखः तदनन्तरं भाक्तवादिनाम्, अनिर्वचनीयता-वादिनाञ्च। एतेषु त्रिषु प्रथमः कल्पः **विपर्ययमूलकः** सर्वथाऽभावप्रतिपादनात् द्वितीयः **सन्देहमूलकः** सत्यरूपप्रतिपत्त्यभावात्, अन्तिमो**ऽज्ञानमूलकः** स्वरूपप्रतिपत्त्यभावात्।

राजानकरुय्यककृतालङ्कारसर्वस्वस्य 'विमर्शिनी'- टीकायां जयरथस्य पद्येन ज्ञायते यत् द्वादश ध्वनिविप्रतिपत्तयः सन्ति-

**तात्पर्यशक्तिरभिधा लक्षणानुमिती द्विधा।।**
**अर्थापत्तिः क्वचित्तन्त्रं समासोक्तयाद्यलङ्कृतिः।।**

**रसस्य कार्यता भोगो व्यापारान्तरबाधनम्।**
**द्वादशेत्थं ध्वनेरस्य स्थिता विप्रतिपत्तयः।।**

किन्तु, ध्वन्यालोककारेण ध्वनेर्विपतिपत्तिप्रकारत्रयमेव प्राधान्येनोक्तम्, तदेव क्रमशः पर्य्यालोच्यतेऽत्र।

### अभाववादः

ध्वनिविप्रतिपत्तिषु प्रथमः पक्षः अभाववादिनामेवास्ति। अभाववादिनां कल्पं कल्पयता ग्रन्थकारेण यत् क्रियापदं 'जगदुः' एवम् 'ऊचुः' इति प्रयुक्तं, तेन ज्ञायते यत् विचार्यमाणोऽभाववादः ध्वनिकारेण न श्रुतः, सम्भावनया

---

१. ध्व. १.१

कल्पित:। अतएव वृत्तौ विकल्पशब्देनाप्यभिहित:। अभाववादिनामपि तत्र त्रयो विकल्पा:।

१. ''शब्दार्थशरीरं तावत् काव्यम्। तत्र च शब्दगताश्चारुत्वहेतवोऽनुप्रासादय: प्रसिद्धा एव। अर्थगताश्चोपमादय: वर्णसंघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते। तदनतिरिक्तवृत्तयोऽपि या: कैश्चिदुपनागरिकाद्या: प्रकाशितास्ता अपि गता: श्रवणगोचरम्। रीतयो वैदर्भीप्रभृतय:। तद्व्यतिरिक्त: कोऽयं ध्वनिर्नामेति॥[1]''

२. ''नास्त्येव ध्वनि: प्रसिद्धप्रस्थानव्यतिरेकिण: काव्यप्रकारस्य काव्यत्वहाने:, सहृदयहृदयाह्लादि शब्दार्थमयत्वमेव काव्यलक्षणम्। न चोक्तप्रस्थानव्यतिरेकिणो मार्गस्य तत्सम्भवति। न च तत्समायान्त:पातिन: सहृदयान् कांश्चित्परिकल्प्य तत्प्रसिद्ध्या ध्वनौ काव्यव्यपदेश: प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते।[2]''

३. ''न सम्भवति ध्वनिनामापूर्व: कश्चित्। कामनीयकमनतिवर्तमानस्य तस्योक्तिषु एव चारुत्वहेतुष्वन्तर्भावात्। तेषामन्यतमस्यैव वा अपूर्वसमाख्यामात्रकरणे यत्किञ्चन कथनं स्यात्[3]''

पुनरभाववादिनां मतमुपसंहरताऽऽचार्येण लिखितमस्ति—''तस्मात्प्रवादमात्रं ध्वनि:। न त्वस्य क्षोदक्षमं तत्त्वं किञ्चिदपि प्रकाशयितुं शक्यम्।'' तदनन्तरं तेन ध्वनिविरोधिनो मनोरथस्य पद्यमपि समुद्धृतमस्ति यत्—

**यस्मिन्नस्ति न वस्तु किञ्चन मन:प्रह्लादि सालङ्कृति**
**व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत्।**
**काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो**
**नो विद्मोऽभिदधाति किं सुमतिना पृष्ट: स्वरूपं ध्वने:॥[4]**

---

१. ध्व. १.१ वृ.
२. तत्रैव १.१ वृ.
३. तत्रैव १.१ वृ.
४. तत्रैव १.१ वृ.

अत्राभाववादपक्षतः येऽत्र विकल्पाः समुपस्थापिताः, ते सर्वे कल्पाः कुतः समानीताः केषाञ्चाचार्याणामभिमतमादाय निर्मिता इत्यादिविषये ग्रन्थकारेण किञ्चिदपि स्पष्टरूपेण नोक्तमस्ति। एते कल्पिताः कल्पा इति समीक्षकाः सङ्गिरन्ते। ध्वन्यालोकस्याविर्भावात् प्राक् साहित्यशास्त्रे प्रतिष्ठितानां सिद्धान्तानां समीक्षणेनापि स्यादुद्भासितः कश्चन पक्षो येन एतासु विप्रतिपत्तिषु मूलत्वेन स्थितस्य स्रोतसः ज्ञानं स्यात्। अतः ध्वन्यभाववादस्य मूलानुसन्धाने पूर्ववर्त्तिनामालङ्कारिकाणां सिद्धान्तसमीक्षणमावश्यकमिति धिया संक्षेपेण विमृश्यन्तेऽत्र तत्तत्सिद्धान्ताः तत्प्रवर्तकाश्च।

## आचार्यभामहः

भामहः समुपलब्धकाव्यशास्त्रीयपरम्परायाः प्रथम आलङ्कारिकः तस्य प्रसिद्धो ग्रन्थः काव्यालङ्कारः। स खलु अलङ्कारसम्प्रदायस्य प्रवर्तकः षष्ठशतकस्य आलङ्कारिकः। शब्दार्थौ सहितौ काव्यमिति व्याहरता तेन शब्दार्थयोः साहित्यमेव काव्यत्वेनाङ्गीकृतं ततोऽन्यैरलङ्कारशास्त्रस्याचार्यैः। तेन काव्येऽलङ्कारस्यैव प्रामुख्यं प्रादर्शि। काव्यशोभाधायकं यत्किमपि वस्तु विद्यते तत्त्वलङ्कृतिरेवेति तस्याभिमतम्।

तेन स्पष्टमेवोद्घोषितम्—

**रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।**
**न कान्तमपि निर्भूषं विभाति वनिताननम्।।**

**रूपकादिमलङ्कारं बाह्यमाचक्षते परे।**
**सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्॥**

**तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।**
**शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः॥**[१]

काव्यशोभाधायका धर्माः शब्दनिष्ठा अर्थनिष्ठा वा, शब्दनिष्ठाः शब्दालङ्काररूपेण स्वीकृताः, अर्थनिष्ठाश्च अर्थालङ्काररूपेणाङ्गीकृताः।

१. काव्या. भामहः, १.१

उभयस्याति काव्यचारुत्वसम्पादने योगः। अलङ्कृतेरपि मूलं सः अतिशयोक्तिं मनुते।

**निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।**
**मन्यतेऽतिशयोक्तिं तामलङ्कारतया यथा।।**[१]

'अतिशयोक्ति-गर्भता सर्वालङ्कारेषु शक्यक्रिया' इति ब्रुवाणः आनन्दवर्धनोऽपि श्रद्दधते भामहस्य प्रतिपादेन ऽस्मिन्। अतः वक्रोक्त्यपरनाम्नी ह्यतिशयोक्तिरलङ्कारत्वसम्पादयित्रीति केषाञ्चिद् विदुषां समयः, केषाञ्चिच्च भिन्नत्वेनोभयोः सर्वालङ्कृतिजनकत्वमिति।

**सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**[२]

इत्येतदस्ति भामहस्य सुवचो महत्। वस्तुतः वक्रोक्तौ अस्य महती श्रद्धा।'**वक्रोक्त्यनभिधानतः**' इति हेतुं प्रदर्श्य वक्रोक्तिरहितानां पूर्वपरम्परातः, स्वीकृतानामप्यलङ्काराणां खण्डनं कृतम्।'**वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते** ' इति व्याचक्षाणेन तेन वक्रोक्तिशून्यस्य वाक्यस्य 'वार्ता' -रूपेण प्रतिपादनं विधाय अलङ्कृतिहीनत्वेन तस्य काव्ये अनङ्गीकार एवोपदिष्टः।

**हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः।**
**समुदायाभिधानस्य वक्रोक्त्यनभिधानतः।।**

**गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।**
**इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते ।।**[३]

रसानां रसवदलङ्कारे परिग्रहणं भामहस्यालङ्कारवादित्वमेव द्रढयति। तेनालङ्कारशास्त्रे गुणस्य त्रैविध्यमपि प्रथमतया प्रतिपादितम्। अयमेव संक्षेपो भामहस्य।

---

१. काव्या., भामहः, २.८१
२. तत्रैव २.८५
३. तत्रैव २.८६-८७

## आचार्यदण्डी

अलङ्कारसम्प्रदाये भामहादनन्तरं दण्डिनः स्थानमस्ति। तेन विरचितः काव्यादर्शः साहित्यशास्त्रपरम्परायां विशिष्टं स्थानं भजते। असंशयम-यमलङ्कारवादी। रीतिसम्प्रदायस्य विकासेऽप्यस्यास्ति महत्त्वपूर्णमवदानम्। भामहस्य इव अस्यापि विवेचनं काव्यशरीरमेवादाय प्रवर्तते। काव्यं लक्षयता तेन निगदितं यत—‘**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली**’[१] इति। अतः अभिलषितार्थसमन्वितस्य शब्दस्येव काव्यत्वं दण्डिनोऽभिमतम् तत्रैव च संस्कारदृष्टिः। ‘**काव्यशोभाकरान् धर्मानलङ्कारन् प्रचक्षते**’[२] इति व्याहरता तेन काव्ये काव्यशोभासम्पादकानामलङ्काराणामेव प्राधान्यं समुद्घोषितम्।

काव्यशास्त्रे प्रथमं दण्डिनैव दश गुणा विवेचिताः। गुणान् भूमिकीकृत्य मार्गसिद्धान्तोऽपि तेन प्रवर्तितः। अयमेव मार्गसिद्धान्तः वामनरीतिसिद्धान्तस्य जनक इति विदुषां मतम्।

ने केवलं रसस्यान्तर्भावः रसवदलङ्कारेऽपितु सन्ध्यङ्गादीनामपि नाट्यवैशिष्ट्यानामलङ्कारतयात्र निबन्धनमेवास्ति दण्डिनो विशेषः।

## आचार्यवामनः

अलङ्कारशास्त्रपरम्परायां दण्डिनः परं वामनस्य आविर्भावो जातः। वामनः कश्मीरवासी किञ्चित्पूर्ववर्त्ती आनन्दवर्धनात्। काव्यालङ्कारसूत्रवृत्तिरिति तस्य सूत्रात्मको ग्रन्थः। अयं रीतिसिद्धान्तस्य प्रर्वतक इति समीक्षकाः प्रतिपादयन्ति। वस्तुतोऽयं सौन्दर्यवादी। ‘**काव्यं ग्राह्यमलङ्कारात्**’[३] ‘**सौन्दर्यमलङ्कारः**’[४] इति तस्य प्रमुखः सिद्धान्तः। काव्यसौनदर्यसम्पादकेषु साधनेषु रीतिरपि साधनाविशेष इत्येवोचितं वक्तव्यम्। रीतेः साध्यत्वेन प्रतिपादनं

---

१. काव्यादर्शः,

२. तत्रैव

३. काव्या. सू. १.१.१

४. तत्रैव १.१.२

भ्रमात्मकमेव। '**रीतिरात्मा काव्यस्य**'[१] इत्यस्मिन् वाक्ये आत्मशब्दः प्रशंसापरः, नास्ति काव्यस्य सारभूतार्थकः।

'**काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते।**'[२] इति ब्रुवाणः स काव्यस्वरूपविषये भामहमेवानुसरति। व्यापकत्वं प्रदर्श्य तत्रैव सर्वेऽपि काव्योपस्कारकाः पदार्थाः विवेचिताः। गुणालङ्कारयोः पार्थक्यमपि '**काव्यशोभायाः कर्त्तारो धर्मा गुणाः तदतिशयहेतवस्त्वलङ्काराः**'[३] इति व्याहरताऽनेनैव स्फुटीकृतम्। वामनेन दश शब्दगुणाः दश चार्थगुणाः रीतेर्वै शिष्ट्येन प्रतिपादिताः तत्रैव कान्तिनामके अर्थगुणे '**दीप्तरसत्वं कान्तिः**'[४] इति सूत्रं विधाय रसा अप्यन्तर्भाविताः।

## आचार्योद्भटः

उद्भटोऽपि वामनसमसमयः, अयं न केवलं कश्मीरवासी अपितु काश्मीरकभूमिपतेर्जयापीडस्य (७७९-८१३ ई.) सभापतिपदमलङ्कार्षीदिति राजतरङ्गिणीप्रणेतुः कल्हणाज्ज्ञायते। काव्यालङ्कारसारसंग्रहमन्तरा न कोऽपि भट्टोद्भटप्रणीतो गन्थोऽद्ययावदुपलब्धिपथं प्राप। वामनदामोदरगुप्तादीनां समसमयः मनोरथादीनाञ्च कविवराणां प्रमुखः भट्टोद्भट एकमेव प्रबन्धं प्रणिनायेति किं केनाऽपि पार्यते कल्पयितुम्। निपुणं तु निरूप्यमाणे प्रतिहारेन्दुराजेनोल्लिखितं बहुभिश्चाभिनवगुप्तादिभिरंशतोऽनुपदमनूदितं भामहकाव्यालङ्कारविवरणं तथा कुमारसम्भवाख्यमन्यत्काव्यञ्च प्रतीहारेन्दुराजेन काव्यालङ्कारसारसंग्रहव्याख्यात्रा निर्दिष्टं भट्टोद्भटेन प्रणीतमिति निर्धारयितुं शक्यते।

अयं काव्येषु शब्दार्थालङ्कारसङ्घटनस्यैव प्राधान्येन कविप्रतिभा-संरम्भगोचरत्वमुरीकुवर्तः शृङ्गारदींश्च रसान् गुणीकृत्य रसवदाद्यलङ्कारेष्वन्त-र्भावयतः भामहस्य समयानुयायीति विमर्शकानां समयः।

१. काव्यालङ्कारसू. १.२.६
२. तत्रैव, वृ. १.१.१
३. तत्रैव, ३.१.१
४. तत्रैव, ३.१.१४

उद्भटो नाट्यशास्त्रमपि टीकते, इति शार्ङ्गदेवाभिनवगुप्तकुन्तकादीनां समुल्लेखादवसीयते। अतएव 'नव नाट्ये रसाः स्मृताः' इति निर्दिशन् उद्भटो दशरूपकेतरेस्मिन् काव्यप्रपञ्चे रसवदादीनामलङ्कारतामभ्युपगच्छन्नभिव्यनक्ति नाट्येषु रसानां प्रधानभावम्।

उद्भटस्तु भामहालङ्कारविवरणेनालङ्काराणामेव काव्यालङ्कारेषु सारतां बुद्ध्वा सविशेषमुद्देश्यलक्षणविभजनादि यावदुपलम्भं तेषां प्रभेदान् सूक्ष्मेक्षिकया विभाव्य पूवर्वालङ्कारिकसम्मतालङ्कारक्रमं चाविरोधेन निवेश्यालङ्कारप्रधानकाव्यस्यातिसुन्दरतां रमणीयकाव्यकरणेन द्योतयन् गुणानां रीतीनाञच प्राणात्मतामभिमन्वानौ दण्डिवामनावतिशयानः शब्दार्थालङ्कारणां शब्दसङ्घटनाविशेषात्मकगुणानां रसप्रधानोक्तीनां च काव्यालङ्कारेष्वन्तर्भावम-भिसन्दधदुक्तालङ्कारेष्वेव काव्यशोभाधानाय कवीनां दृष्टिमुपसंहरन् अलङ्काराणामेव काव्येषु प्रधान्यं निगदतां मतस्योत्तमं पदमध्यास्ते। शान्ताख्यस्य नवमनाट्यरसस्य काव्येषु रसवद्रूपेण संयोजनस्येदम्प्रथमतया निदर्शनं विशिनष्टि भट्टोद्भटम्।

## आचार्यरुद्रटः

अलङ्कारसम्प्रदायस्य उद्भटभट्टोत्तरवर्त्ती प्रमुखोऽयमाचार्यः। अस्यापि जन्मस्थानं कश्मीर एव। अयम् आनन्दवर्धनात् किञ्चित्पूर्ववर्त्तीति व्याहरन्ति समीक्षकाः।

रससिद्धान्तप्रभावप्रभावितोप्ययमलङ्कारवादी। स्वकीये काव्यालङ्कारे रसरीतिवृत्तिदोषादींश्चारुत्वसम्पादकान् वर्णयन्नलङ्कारनिरूपणाय सविशेषं प्रयतते। अत एव ग्रन्थस्यार्धभागं यावत् प्रायः अलङ्कारनिर्वचनमेवास्ति। भामहोद्भटप्रभृतीनां रीतिं नूतनतया काव्यमार्गे विनियोज्य तत्र रीतिसम्प्रदाये न प्रदर्शितः परमानुरागः। येनायमलङ्कारिक एवेति फलितम्। शब्दार्थयोः साहित्यमेव काव्यत्वेनाङ्गीकरोत्ययमपि[१]। प्रथमं शब्दाश्रयेण समेऽपि काव्यविशेषास्तत्र

---

१. काव्या. रुद्रटः, २.१

पर्यालोचिताः सन्ति। रुद्रटेनात्रोदाहृतं पद्यं मम्मटेन स्वकीये काव्यप्रकाशे गुणीभूतव्यङ्ग्यस्योदाहरणत्वेन प्रदत्तम्।

**''ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्॥**
**पशन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥''**[१]

एतेषां ध्वनिपूर्ववर्त्तिनामाचार्याणां सिद्धान्तपरिशीलनेनेदं सुस्पष्टं निष्पद्यते यत् सर्वेऽपि एते आचार्याः ध्वनेश्चर्चां विनैव स्वसिद्धान्तं प्रतिपादयन्ति। यद्यपि ध्वनिपक्षतः सूक्ष्मेक्षिकया समालोचनेन तत्रापि व्यङ्ग्यार्थभूमिरस्तीति शक्यते वक्तुं, किन्तु ते आचार्याः न परिचिन्वन्ति तमर्थं व्यङ्ग्यार्थरूपेण व्यञ्जनाऽनाविष्करणात्। भामहस्य वक्रोक्तौ, दण्डिनः अतिशयोक्तौ, तथैवोद्भटस्यापि अलङ्कारकल्पनायां, वामनस्य च रीतौ उपमायाञ्चावश्यं वर्तते व्यञ्जनाबीजं किन्तु अनाविष्कृतप्ररोहम्। वस्तुतः ध्वन्यालोकात् पूर्वम् अलङ्कारशास्त्रे शब्दशक्तीनां काऽपि चर्चैव नासीत्। शब्दशक्तिविचारः व्याकरणन्यायमीमांसादिशास्त्रविषयक एवासीदिति।

एतेष्वाचार्येषु केचन आनन्दवर्धनस्य सामसमयिकास्तथापि ते स्वप्रबन्धे ध्वनेश्चर्चां न कुर्वन्ति, अतो नाङ्गीकुर्वन्ति ते इति पक्षमुद्भाव्य ग्रन्थकारेण ध्वन्यालोके अभाववादिनां कल्पाः प्रदर्शिताः।

प्रथमकल्पे ते आचार्या बोधिताः, ये काव्यचारुत्वसम्पादनार्थं शब्दार्थालङ्कारान् गुणान् रीतिवृत्तिप्रभृतीन् प्रतिपादयन्ति, किन्तु तद्व्यतिरिक्तस्य तत्त्वस्य काव्यचारुत्वसम्पादकत्वमेव नोरीकुर्वन्ति।

द्वितीयकल्पे अन्ये ते आचार्याः सन्ति ये अलङ्कारवादिनः किञ्चित्परिवर्तनमङ्गीकुर्वन्तोपि प्रस्थानमेवानुयान्ति। तत्रप्रस्थानव्यतिरेकिणः कस्यापि तत्त्वस्य नवीनस्य स्वीकाराभावात् तेषामस्ति समुल्लेखः।

अलङ्कारप्रस्थाने कश्चन विकासोऽपि परिलक्ष्यते। भामहेन यावन्तोऽलङ्काराः प्रदर्शितास्ततोप्यधिका भट्टोद्भटेन भट्टोद्भटादप्यधिकाः रुद्रटेन। अतो यथा नूतनत्वेन कल्पिता अपि वाग्विकल्पाश्चारुत्वसम्पादनादलङ्का-

१. काव्या. ल.. रुद्रटः, ७.३९

रास्तथैवान्येऽपि भविष्यन्तीति विचार्य तृतीयः कल्पः समुपस्थापितः अभाववादिनाम्। अभाववादिनामेतेषु कल्पेषु कश्चन क्रमः परिदृश्यते। प्रथमे कल्पे ध्वनेः सर्वथाऽभावः प्रदर्शितः, द्वितीयकल्पे तस्य जातायां सत्तायां प्रस्थानभेदादस्वीकारः समुपदिष्टः, तृतीये कल्पे पुनः अन्यचारुत्वहेतुष्वन्तर्भावात् पृथक्प्रत्यादेशः कृतः। क्रमादभावोऽयं ध्वनेः परिदुर्बलः प्रतीयते, अर्थात् अभावः क्रमशः परिक्षीयते।

अभाववादिनां पक्षतः कल्पितानेतान् कल्पान् विशदं विवेच्य ध्वन्यालोककारेण ध्वनिसंस्थापना विहिता। तेनोद्घोषितं यत् सकलकाव्योपनिषद्भूतो ध्वनिः रामायणादिग्रन्थेषु प्रारम्भादेवास्ति, न कोपि शक्नोति अपलपयितुम् तं न वा अन्तर्भावयितुमन्येषु चारुत्वहेतुषु। अन्ये चारुत्वहेतवः वाच्यवाचकभावमाश्रित्य स्थिताः सन्ति, अयं पुनः व्यङ्ग्यव्यञ्जकभावमाश्रित्य प्रवर्तते। अलङ्कारास्त्वन्ये, अङ्गभूताः। अयमङ्गी, फलतः काव्येऽलङ्कार्यतया स्थितोऽस्ति।

## भाक्तवादः

ध्वन्यालोके समुल्लिखितेषु ध्वनिविरोधिषु भाक्तवादिनामस्ति द्वितीयं स्थानम्। प्रथमपद्यस्य 'भाक्तमाहुस्तमन्ये' इति व्याहारेण भाक्तवादिनः वर्तमानक्रियापदेनोक्ताः। यद्यपि ध्वन्यालोके नास्ति कस्यापि अभाववादिनः नाम्ना निर्देशः किन्तु वर्तमानक्रियायाः समभिव्याहारेण भाक्तवादिनः तस्य सामसमयिका इत्यवसीयते। अनेनैव खलु प्रयोगेण भाक्तवादिनामविच्छिन्नप्रवाहोऽपि सुतरां द्योतते। वस्तुतो ध्वन्यालोकस्याविर्भावात् पूर्वं शब्दस्य मुख्यव्यापारेण सहैवामुख्यव्यापारस्यापि परिशीलनं न्यायमीमांसादिशास्त्रेषु दृश्यते। ध्वन्यालोकादनन्तरं जायमानं परिशीलनं पृथग् विचारयिष्यते। अत्र प्रसङ्गे पूर्ववर्त्तिनीमेव भक्तेः स्थितिं विचारपदवीमानयामः।

ध्वन्यालोकस्य प्रथमोद्द्योते भाक्तवादिनां कल्पितः पक्षः निम्नलिखितरूपेणास्ति समुल्लिखितः।

'भाक्तमाहुस्तमन्ये। अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुः।

यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितः तथापि अमुख्यवृत्त्या काव्येषु व्यवहारं दर्शयता ध्वनि-मार्गो मनाक् स्पृष्टोऽपि न लक्षित इति परिकल्प्यैवमुक्तम्—भाक्तमाहुस्तमन्ये इति।

सर्वप्रथमं भाक्तशब्दोऽत्र विचारपदवीमानीयते। लोचने भाक्तशब्दं विवृण्वताऽऽचार्याभिनवगुप्तपादेन पत्यपादि यत्— 'भज्यते सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यते इति भक्तिधर्मोऽभिधेयेन सामीप्यादिः, तत आगतो भाक्तो लाक्षणिकोऽर्थः। यदाहुः-

**अभिधेयने सामीप्यात् सारूप्यात्समवायतः।**
**वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता।।**[१]

गुणसमुदायवृत्तेः शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः, तत आगतो गौणोऽर्थो भाक्तः। भक्तिः प्रतिपाद्ये सामीप्यतैक्ष्णयादौ श्रद्धातिशयः तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणे लाक्षणिकश्च। मुख्यस्य चार्थस्य भङ्गो भक्तरित्येवं मुख्यार्थबाधानिमित्तत्रयसद्भाव उपचारबीजमित्युक्तं भवति।' गुणवृत्तिशब्दोऽपि पर्यालोच्यतेऽत्र—'गुणाः सामीप्यादयो धर्माः तैक्ष्ण्यादयश्च। तैरुपायैर्वृत्तिरर्थान्तरे यस्य, तैरुपायैर्वृत्तिर्वा शब्दस्य यत्र स गुणवृत्तिः शब्दोऽर्थो वा। गुणद्वारेण वा वर्तनं गुणवृत्तिमुख्याभिधाव्यापारः। एतदुक्तं भवति ध्वनतीति वा, ध्वन्यत इति वा ध्वननमिति वा यदि ध्वनिः, तथाप्युपचरितशब्दार्थव्यतिरिक्तो नासौ कश्चित्। मुख्यार्थे ह्यभिधैवेति पारिशेष्यादमुख्य एव ध्वनिः तृतीयराश्यभवात्।'

निष्कर्षतः शब्दस्यामुख्यव्यापारेण प्रवर्तितायामेव भक्तौ ध्वनेरस्यापि ध्वनिशब्दसङ्कीतनेन विनापि अन्तर्भावं समीहन्ते प्राचीना आलङ्कारिका भामहवामनोद्भटाः। काव्यहेतुं परिगणयता भामहेनोक्तम् '**शब्दाश्छन्दोभिधा-नार्थाः।**'[२]

---

१. ध्व. लो. १.१ वृ. पृ. ११
२. काव्या., भामहः , १.९

अत्र शब्दाभिधानयोः पृथगुपादानादस्ति द्योतितं पार्थक्यं किमपि। अतएव 'शब्द'-पदात् अभिधानस्य भिन्नत्वं व्याख्यातुं भट्टोद्भटो बभाषे— 'शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च इति।' ब्रूते वामनोपि **'सादृश्याल्लक्षणा वक्रोक्तिः'**[१] इति अतस्तैः ध्वनिदिगुन्मीलिता यथालिखित-पाठकैस्तु स्वरूपविवेकं कर्त्तुमशक्नुवद्भिस्तत्स्वरूपविवेको न कृतः इत्यभिनवगुप्तपादाः।

उपर्युक्तविवेचनेनेदं निष्पन्नं यत् प्राचीनैः भामहादिभिः वाच्याद्भिन्न-त्वेनास्यापि ध्वनेरन्तर्भावो भक्तावेव समीहित इति ग्रन्थकारेण कल्पितः।

भक्तितः ध्वनेः पार्थक्यं प्रतिपादयितुकामः स प्रतिपृच्छति किमु भाक्तवादिनः भक्त्या ध्वनेरैक्यमभिलषन्ति उताहो ध्वनिर्लक्ष्यते उभयमप्य-सम्भवम्।

**भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।**
**अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया।।**

**उक्त्यन्तरेणाशक्यं यच्चारुत्वं प्रकाशयन्।**
**शब्दोव्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयीभवेत्।।**

**रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।**
**लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः।।**

**वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।**
**व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्[२]।।**

तस्मादन्यो ध्वनिरन्या च गुणवृत्तिरिति ध्वन्यालोककारसिद्धान्तः।

## अशक्यवक्तव्यत्ववादः

ध्वन्यालोके विरोधिनां यस्तृतीयः प्रकारः समुपस्थापितोऽस्ति ध्वनेरनिर्वाच्यातामङ्गीकुर्वतां सोपि अनुल्लिखतपूर्वः, स्वयमेव समुद्भाव्य परीक्षितोऽस्ति ग्रन्थकारेण ध्वनिसंस्थापनाय। तेषां निम्नलिखितः कल्पप्रकारः-

१. काव्यालङ्कारसू. ४.३.८
२. ध्व. १.१७-२१

**'केचिद्वाचां स्थितमविषये तत्वमूचुस्तदीयं'**[१] तथा केचित् पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः।' अर्थात् ते ध्वनेः सत्तां स्वीकुर्वन्ति किन्तु तद्रूपं वक्तुमप्रभवन्तः तदनाख्येयमितिव्याहरन्ति। तेषां मतौ ध्वनेर्वाणीविषयत्वं न सम्भवति, ध्वनिरयं सहृदयैर्वेद्यते केवलमिति प्रतिपत्तिः।

अशक्यवक्तव्यत्ववादिनां पक्षममुं समादधता ध्वन्यालोककारेण प्रतिपादितं यद् अनिर्वाच्यवादिनः ध्वन्यपरीक्ष्यवादिनः यतो हि ध्वनेस्ते सप्रभेदं सामान्यविशेषलक्षणे प्रतिपादितेऽपि तस्यानाख्येयत्वं समुपसेवन्ते। तृतीयोद्द्योते मतमिदं भृशं पर्यालोचयता तेन सविशेषं स्फुटतयैव लक्षणीयं स्वरूपमस्य ध्वनेः न्यरूपि। रत्नविशेषाणां जात्यत्वमिवानाख्येयं शब्दानामर्थानां च केषाञ्चित्प्रतिपत्तृविशेषसंवेद्यं चारुत्वमिति यो हि व्याहारः स तु सर्वथाऽनुचित एव। यतो हि शब्दानां स्वरूपाश्रयेण वाचकत्वाश्रयेणार्थाश्रयेण चावभासिता विशेषताः शक्यन्ते व्याख्यातुम्। तद्व्यतिरिक्तानाख्येयविशेषसम्भावना तु विवेकावसादभावमूलैव। वस्तुतः रत्नविशेषाणां जात्यत्वमिवात्र दृष्टान्ते नास्त्यनाखेयत्वं यथा तथैव काव्येऽपि, उभयेषामपि तेषां प्रतिपत्तृविशेष-संवेद्यत्वमस्त्येव। तदिदमुक्तम्—

**अनाख्येयांशभासित्वं निर्वाच्यार्थतया ध्वनेः।**
**न लक्षणं लक्षणं तु साधीयोऽस्य यथोदितम्।।**[२]

उपर्युक्तविवेचनेन निष्पद्यते यद् आनन्दवर्धनस्य काले काव्यात्मनो ध्वनेर्योऽभावः प्रतीतिपथमानीयते स्म विरोधिभिस्तेषां पक्षाणां समाधान-मतीवावश्यकं ध्वनिसंस्थापनायेतिविमृश्य ग्रन्थकारेण ध्वनिविरोधिपक्षः समुद्भावितः पश्चाच्चैतत्कल्पकदम्बः भृशं खण्डितः। एतत्समीक्षितमत्र। अन्ये ये ध्वन्यालोकोत्तरकाले प्रबला ध्वनिविरोधिनः समुदभूताः तेषां समीक्षणं पृथग्विभागेनास्ति समुपनिबद्धं, तत्रैव द्रष्टव्यमिति।

---

१. ध्व., १.१
२. तत्रैव, ३.४८ वृ.

## ध्वनिपरम्परायां प्रमुखा आचार्याः

साहित्यपरम्परायां प्रविर्त्तितो ध्वनिसिद्धान्तोतिविशिष्टं स्थानं भजते, नास्त्यत्र संशीतिः। ध्वनिसिद्धन्तोऽयं ध्वनिविरोधिनामभावभाक्तनिर्वचनी-यतावादोत्थितविप्रतिपत्तीः सन्दूष्य प्रबलतर्कैरानन्दवर्धनेन सुदृढं प्रतिपादितः। तथापि ततः परं सञ्जाताः केचन साहित्यिका ध्वनिविरोधिनो नाङ्गीकुर्वन्ति स्म ध्वनिमार्गम्। तैरुद्भावितं ध्वनेर्विविधविरोधं शमयता ध्वन्यालोकलोचनकृता महामहेश्वराचार्येणाभिनवगुप्तपादेन गरीयसीभिः युक्तिभिर्महता च श्रमेण पुनः शिखरे समारोपितो ध्वनिसिद्धान्तः। निश्चितरूपेणाभिनवगुप्तस्य पाण्डित्य-सञ्जीवनीमवाप्य ध्वनिसिद्धान्तः सर्वातिशायी सञ्जातः। तथापि ध्वनिविरोधः सर्वथा नास्तङ्गतः। केचन न सहन्ते स्म ध्वनितत्त्वम्, तेषु च कैश्चन ध्वनिविरोधग्रन्थिं गृहीत्वा हृदयगह्वरे ग्रन्था अपि सङ्ग्रथिताः प्रचारितश्च ध्वनिविरोधवादोऽतीवसंरम्भेण। किन्तु नातिचिरं, वाग्देवतावतारो मम्मटो लेभे जनिं कश्मीरदेशे। ध्वनिप्रस्थापनपरमाचार्य इति यस्यास्ति विरुदः। मम्मटभट्टेन शब्दव्यापारविचाराख्यं ग्रन्थं निर्माय निर्माय च काव्यप्रकाशं सर्वेऽपि ध्वनिविप्रतिपत्तिमूलाः पक्षास्तत्र भृशं खण्डिताः संस्थापिता च सुदृढं ध्वनिपरम्परा पुनरेकवारम्। वाग्देवतावतारेण श्रीमम्मटेन पुष्टिं प्रापितो ध्वन्यालोककारे-णानन्दवर्धनेन संस्थापितध्वनिकल्पवृक्षः यश्च कविराजविश्वनाथपण्डित-राजजगन्नाथादीनां जलसेकालवालादिसदुपचारैः सम्भृतफलपुष्पराशिः साम्प्रति-कसमीक्षाविधावाहरते मनांसि विबुधानाम्। अतएवात्र ध्वनिप्रस्थानपरिशील-नायोपन्यस्यते परिचयः संक्षेपविधिना प्रमुखाणामाचार्याणामेव केवलम्।

### आचार्य आनन्दवर्धनः ( ९०० ई० )

ध्वन्यभावविमर्शनात्प्राग्ध्वनिसिद्धान्तस्वरूपपरिज्ञानं नितरामपेक्षित-मस्ति ततोऽपि पूर्वं तत्सिद्धान्तसंस्थापकस्य परिचयश्च। अतो हेतुना तदेव विमृश्यते प्रथमम्।

ध्वनिसिद्धान्तस्य संस्थापनायामेव विरचितो ध्वन्यालोकाख्यो ग्रन्थः सुविदित एवास्ति विदुषाम्। ध्वन्यालोकः कारिकावृत्तिभ्यां युक्तेन उद्द्योतचतुष्टयेन

संग्रथितोऽस्ति। काव्यालोकोऽपि नामान्तरमस्य लोचनेन ज्ञायते। विवदन्तेऽत्र समीक्षकाः पाश्चात्त्यसमीक्षणपद्धतीमनुरुन्धाना यत् कारिकाकारः कश्चिदन्यो वृत्तिकारश्च कश्चिदन्य इति। वस्तुतो नेयं भारतीया मनीषा प्राचीना। समेऽपि प्राचीनाः साहित्यशास्त्रसमीक्षकाः समग्रं ध्वन्यालोकम् आनन्दवर्धनस्यैव कृतित्वेनामनन्ति। लोचने यो हि कश्चन कारिकाकृद्वृत्तिकृतोः भेदावभासः समुपजायते स तु अवभासमात्रमेव। यतो हि महामहेश्वराणामभिनव-गुप्तपादानामेषा व्याख्यानसरणिः। ते कृतिभेदेन कर्तृभेदं कल्पयन्ति तात्पर्यप्रकाशनाय। यथा–उत्पलदेवस्य कृतिरस्ति 'ईश्वरप्रत्यभिज्ञा'। तेनैव उत्पलदेवेन तस्य ग्रन्थस्य वृत्तिः कृता टीकाऽपि। अभिनवगुप्तपादैः प्रथमं मूलग्रन्थस्य टीका 'ईश्वरप्रत्यभिज्ञाविमर्शिनी' कृता तदनन्तरं वृत्तेष्टीका ईश्वरप्रत्यभिज्ञाविवृत्तिविमर्शिनी इति। ग्रन्थस्यारम्भे तैर्लिखितमस्ति यत्–

**वृत्त्या तात्पर्यं टीकया तद्विचारः सूत्रेष्वेतेषु ग्रन्थकारेण दृब्धम्।**

अतो वृत्तिकारटीकाकारयोरेकत्वं नास्त्यप्रकाशितम्। तथापि तत्र व्याख्यानक्रमे लिखितमस्ति यत्– 'इयति च व्याख्याने वृत्तिकृता भरो न कृतः तात्पर्यव्याख्यानात्, टीकाकारेणापि वृत्तिमात्रं व्याख्यातुमुद्यतेन नेदं स्पृष्टम्' नास्त्यत्र वास्तविकः कश्चनापि वृत्तिकृट्टीकाकृतोर्भेदः, अपितु आचार्यस्यैषा व्याख्यानपद्धतिः। अतोऽभिनवगुप्तपादस्य व्याख्यानशैलीमजानन्तः समीक्षकाः ध्वन्यालोकस्य कारिकावृत्तिकर्तृत्वयोर्भेदमनुभवन्ति प्रकाशयन्ति च। परम्परामनुरुन्धानास्तात्पर्यज्ञास्तु अविकलो ध्वन्यालोको राजानकानन्दवर्धनस्यैव रचनेति सिद्धान्तयन्ति।

ध्वनिसिद्धान्तप्रवर्तक आनन्दवर्धनाचार्यः संस्कृतसाहित्यशास्त्रपरम्परायां विशिष्टं स्थानं भजते। अनेन महात्मना आलोचनाशास्त्रस्य कश्चनानुपमो मार्गः प्रदर्शितः, यस्मिन् खलु पूर्ववर्त्तिनामालङ्कारिकाणां समेऽपि विशेषाः सुदृढं परीक्षिताः व्यङ्ग्यार्थप्रतीतौ च यथास्थानं सन्निवेशिताः। नाट्यप्रयोगे मुनिना भरतेन प्राथम्येन समुपदिष्टः रससिद्धान्तः, अस्य ध्वनिमेवाङ्गीकृत्य समुपदिष्टेन काव्यात्मवादेन सुतरां प्रकाशते। काव्ये रसस्यैव प्राधान्यं ध्वनित्वेनप्रति-पादयताऽनेन अलङ्कारगुणरीतिवृत्तिप्रभृतयो रसाभिव्यञ्जनदृशा परामृष्टाः। वस्तुतः

साहित्यशास्त्रस्य षड्विधेषु रसालङ्कारतिध्वनिवक्रोक्त्यौचित्यसिद्धान्तेषु ध्वनिसिद्धान्तः प्रमुखतमः। सामान्यतः, आनन्दवर्धनद्वारा व्यवस्थापितेन ध्वनिमार्गेणैव प्रवर्तते साम्प्रतिकी समीक्षापद्धतिः। यतो हि सर्वान् काव्यविशेषान् क्रोडीकृत्य स्थितोऽस्ति ध्वनिसिद्धान्तः।

आनन्दवर्धनस्य देशकालविषये नास्ति किञ्चिदपि गुप्तम्। नासीत्स केवलं कश्मीरदेशीयोऽपितु काश्मीरकनृपतेरवन्तिवर्म्मणः सभापण्डिते-ष्वन्यतमः। कविकल्हणस्यायं समुल्लेखः सुविज्ञातोऽस्ति विदुषाम्-

**मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।**
**प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्म्मणः॥**

अवन्तिवर्म्मणः शासनकालम् ईसवीयसंवत्सरस्य ८५५ ई० तः ८८४ ई० यावत् प्रमाणयन्ति इतिहासविदः। नवमशतकान्ते वर्तमानस्य कविराजराशेखरस्य समुल्लेखादपि आनन्दवर्धनस्य अयमेव कालः प्रमाणितो भवति। अतः ईसवीयसंवत्सरस्य नवमी शताब्दी आनन्दवर्धनस्य कालत्वेनावसीयते। आनन्दवर्धनस्य जीवनविषये नास्ति किमप्यधिकं परिज्ञातम्। तस्य पितुर्नाम 'नोण इति हेमचन्द्रस्य काव्यानुशासनसमुद्धरणात् ज्ञायते। तथ्यमिदं परिपुष्टतां भजते इण्डिया-आफिसपाण्डुग्रन्थस्य तृतीयाध्यायस्य पृष्ठान्त-विवरणेषु 'नोणोपाध्यायात्मज' इति नामनिर्देशात्। राजानकोपाधिना संन्यासधर्मणि दीक्षितोऽयम् आसीदिति शक्यतेऽनुमातुम्।

आनन्दवर्धनाचार्येण १. विषमबाणलीला, २. अर्जुनचरितम्, ३. देवीशतकम् ४. तत्त्वालोकः, ५. ध्वन्यालोकश्चेति पञ्च मौलिकग्रन्थाः तथा एका ६. धर्मकीर्तेः प्रमाणविनिश्चयस्य धर्मोत्तमा टीका, सर्वमाहत्य षड्ग्रन्थाः प्रणीताः। एतेषु ध्वन्यालोक एव साहित्यशास्त्रीयो ग्रन्थः। काव्यशास्त्रपरम्परायां ध्वनिप्रस्थानप्रवर्तनाय विरचितोऽयं ग्रन्थः समीक्षकैरत्यन्तं समादृतोऽस्ति। वस्तुतः ध्वनिसम्प्रदायस्य अयमेव ग्रन्थो मौलिभूतोऽस्ति। सर्वेऽपि आधारभूताः ध्वनिसिद्धान्ता अस्मिन् ग्रन्थरत्ने निबद्धाः सन्ति। अस्य प्रथमोद्द्योतस्यारम्भ एव ध्वन्यभावविकल्पाः पर्य्यालोचिताः सन्ति।

**आचार्यः अभिनवगुप्तपादः ( ९५०-१०२५ )**

भरतमुनेःरसनिष्पत्तिसूत्रव्याख्यानेषु प्रसिद्धतमस्य अभिव्यक्तिवादस्य प्रवर्तयिताऽस्ति आचार्यप्रवरोऽभिनवगुप्तपादः। अस्य जीवनवृत्तविषये नास्ति गुप्तम्। प्रायः स्वकृतीनामन्ते स्वयमुल्लिखति तत्कृतिकालम्। यथा–

क्रमस्तोत्रे–

**षट्षष्टिनामके वर्षे नवम्यामसितेऽहनि।**
**मयाऽभिनवगुप्तेन मार्गशीर्षे स्तुतः शिवः।।**

भैरवस्तोत्रे–

**'वसुरसपौषे कृष्णदशम्यामभिनवगुप्तः स्तवमिममकरोत्'** इति।

बृहतीविमर्शिन्याम्–

**इति नवतितमेऽस्मिन् वत्सरान्त्ये युगांशे**
**तिथिशशिजलधिस्थे मार्गशीर्षावसाने।।**
**जगति विहितबोधामीश्वरप्रत्यभिज्ञां**
**व्यवृणुत परिपूर्णां प्रेरितः शम्भुपादैः।।**

अनेन क्रमेण कृतीनां यथावसरं कालसमुल्लेखाद् आचार्याभिनवगुप्तस्य जीवनकालसमुल्लेखः स्वयमेव जातः। तेषां ग्रन्थानां परिशीलनपुष्टेनान्तःप्रमाणेन तथाऽन्यबाह्यप्रमाणेनापि तस्य समयः ९५० तमख्रीष्टाब्दमारभ्य १०२५ तमख्रीष्टाब्दं यावत् निर्णीयते समीक्षकैः। आचार्यः स्वयमेव सङ्केतयति स्वजीवनवृत्तान्तं स्वपूर्वजानाञ्च वृत्तान्तं यथावसरं स्वकृतिषु। तेन ज्ञायते यत्– यद्यपि कश्मीरदेशीयोऽयं तथापि तस्य पूर्वपुरुषाः कान्यकुब्जनगरे (इदानीमुत्तरप्रदेशस्य) गङ्गायमुनयोरन्तर्वर्तिन्याम् 'अन्तर्वेदी' नामिकायां ग्रामटिकायां न्यवसन्। अभिनवगुप्ताविर्भावस्य शतद्वयवर्षेभ्यः प्राक् तस्य पूर्वजोऽत्रिगुप्तः कान्यकुब्जाद् गत्वाऽध्युवास कश्मीरम्।

**अन्तर्वेद्यामत्रिगुप्ताभिधानः प्राप्योत्पत्तिं प्राविशत् प्राग्रजन्मा।**
**श्रीकाश्मीराँश्चन्द्रचूडावतारनिःसंख्याकैः पावितोपान्त्यभागान्।।**

अभिनवगुप्तः स्वयमुल्लिखति स्वपितृपितामहौ। तद्यथा–

**तस्यान्वये महति कोऽपि वराहगुप्त-**
**नामा बभूव भगवान्स्वयमन्तकाले।**
**गीर्वाणसिन्धुलहरीकलिताग्रमूर्धा**
**यस्याकरोत् परमनुग्रहमाग्रहेण।।**

**तस्यात्मजः चुलुखकेति जने प्रसिद्ध-**
**श्चन्द्रावदातधिषणो नरसिंहगुप्तः।**
**यं सर्वशास्त्ररसमज्जनशुभ्रचित्तं माहेश्वरी**
**परमलङ्कुरुते स्म भक्तिः।।**

तथैव पितृव्यवामनगुप्तस्य, पितृव्यपुत्राणाञ्चोल्लेखः प्राप्यते तस्य कृतिषु। अभिनवगुप्तस्य पिता महान् पण्डितः परमशैवश्चासीत्। तस्य माताऽपि तथैव धर्मपरायणा चारुशीला चासीत्। अभिनवगुप्तस्तयोरेकमात्रपुत्रो 'योगिनीभू'-रासीत्। ''योगिनीभूः' पुत्रस्य यल्लक्षणं तन्त्रालोकटीकायां वर्णितमस्ति तत्सम्पूर्णतया अभिनवगुप्ते घटते।

**रुद्रशक्तिसमावेशस्तत्र नित्यं प्रतिष्ठितः।।**
**सति तस्मिँश्च चिह्नानि तस्यैतानि विलक्षयेत्।।**

**तत्रैतत् प्रथमं चिह्नं रुद्रे भक्तिः सुनिश्चला।।**
**द्वितीयं मन्त्रसिद्धिः स्यात् सद्यः प्रत्ययकारिका।।**

**सर्वतत्त्वशिवत्वं च तृतीयं लक्षणं स्मृतम्।।**
**प्रारब्धकार्यनिष्पत्तिश्चिह्नमाहुश्चतुर्थकम् ।।**

**कवित्वं पञ्चमं ज्ञेयं सालङ्कारं मनोहरम्।।**
**सर्वशास्त्रार्थवेत्तृत्वमकस्माच्चास्य जायते।।**[1]

---

१. त०लो०टी०, १३.२१३–२१६

एवंविधेषु वर्तमानेष्वपि सल्लक्षणेषु अभिनवगुप्तस्य सम्पूर्णमेव जीवनं प्राय: दु:खमयमेवासीत्। आबाल्यादेव मातापित्रो: वियोगाद् गृहस्थभावाभावाच्च तस्य जीवनं नीरसमेवासीत्। तेन निजजननीवियोग: भाविकल्याणाय कल्पित:-

**'माता व्ययूयुजदमुं किल बाल्य एव**
**दैवं हि भाविपरिकर्मणि संस्करोति।'**[१]

जन्मदात्री माता बालकस्य परमबन्धुरिति प्रसिद्धमपि तथ्यं नाङ्गीकरोत्यसौ मातृस्नेहास्वादविरहात् इति मन्ये।

**'माता परमबन्धुरिति प्रवाद:**
**स्नेहोऽपिगाढीकुरुते हि पाशान्।'**[२]

उपरतायां च मातरि पितृस्नेहस्यापि सुयोगस्तेन नावाप्त:। पत्नीविरहविक्लवो नरसिंहगुप्त: (अभिनवगुप्तस्य पिता) सत्यपि यौवने गृहं परित्यज्य बालकञ्चाप्यभिन-वगुप्तमुपेक्ष्य हठेन प्राव्राजीत्।

**'तारुण्यसागरतरङ्गभरानपोह्य वैराग्यपोतमधिरुह्य दृढं हठेन।'**

फलत: अभिनवगुप्तपादस्य जीवनं प्रबलं प्रभावितम्। साहित्याध्ययनस्योत्कटाभिलाषा तस्य हृदि संजाता, किन्तु अदृष्टप्रभावात् भगवति शिवे तस्य प्रबला भक्तिरुदिता। येन हेतुना, सांसारिकं निखिलं प्रपञ्चमुत्सृज्य भगवत: शिवस्याराधनाया: साधनभूते शैवागमाध्ययने प्रवृत्तोऽसौ।

**साहित्यसान्द्ररसभोगपरो महेश-**
**भक्त्या स्वयं ग्रहणदुर्मदया गृहीत:।**
**स तन्मयीभूय न लोकवर्तनी-**
**मजीगणत् कामपि केवलं पुन:।।**
**तदीयसम्भोगविवृद्धये पुरा**
**करोति दास्यं गुरुवेश्मसु स्वयम्।**[३]

---

१. त०लो०टी०, ३७.५६

२. तत्रैव, ३७.५७

३. त.लो. ३७.५९

अनेनैव क्रमेण तेन विविधानां शास्त्राणामध्ययनं तदानीन्तनानां तत्तद्विषये प्राप्तप्रसिद्धानाम् आचार्याणां सकाशात् सम्पादितम्। प्रायः एकविंशतिः तेषां गुरूणां गणना। तेषु भट्टेन्दुराजः ध्वनिसिद्धान्तस्य गुरुः। तमधिकृत्य तेन ध्वन्यालोकलोचनस्यारम्भे लिखितमस्ति यत्–

**भट्टेन्दुराजचरणाब्जकृताधिवासः**
**हृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम्।**
**यत्किञ्चिदप्यनुरणन्स्फुटयामि काव्या–**
**लोकं सुलोचननियोजनया जनस्य।।**[1]

तथैव भट्टतौतः नाट्यशास्त्रस्य गुरुरासीत्। अभिनवभारत्यां स्वीयां नाट्यवेदपरम्परां प्रतिपादयन् ब्रूतेऽभिनवगुप्तः

**सद्विप्रतौतवदनोदितनाट्यवेद–**
**तत्त्वार्थमर्थिजनवाञ्छितसिद्धिहेतोः।**
**माहेश्वराभिनवगुप्तपदप्रतिष्ठः**
**संक्षिप्तवृत्तिविधिना विशदीकरोति।।**[2]

आनन्दवर्धनोऽपि तस्य गुरुरासीदिति केषाञ्चिन्मतम्। रसनिष्पत्तितत्त्वा–लोककारेण द्वौ आनन्दवर्धनौ ध्वन्यालोककर्तृत्वेनाङ्गीकृतौ। तयोरेकः कारिकाकारोऽन्यस्तु वृत्तिकारः। तत्र द्वितीयो यो हि आनन्दवर्धनः वृत्तिकृत्त्वेनाभ्यूहितः आचार्येण स एवाभिनवगुप्तस्य गुरुः स्यादिति तेषां सम्भावना। अभिनवगुप्तः आनन्दवर्धनस्य साक्षाच्छिष्यो भवतु वा न वा किन्तु अवश्यमेव तेन ध्वन्यालोकस्य अध्ययनं गुरुपरम्परया कृतमिति ज्ञायते, लोचने वारं वारं गुरुपदव्यपदेशदर्शनात्।

अभिनवगुप्तप्रणीताः एकचत्वारिशंद् ग्रन्थाः सन्ति ख्यातिं गताः यद्यपि न सन्ति सर्वे प्रकाशिताः। एतेषु 'ध्वन्यालोकलोचनम्' 'अभिनवभारती' च

१. ध्व. लो., १.२ वृ.
२. अ. भा., १.४

साहित्यशास्त्रस्य ग्रन्थरत्ने। ध्वन्यालोकलोचनम् आनन्दवर्धनेन प्रणीतस्य ध्वन्यालोकस्य टीकारूपेण कृतो ग्रन्थः, मूलादप्यतिशायी वर्तते। अभिनवभारत्यां 'तच्च मदीयादेव तद्विवरणात् सहृदयालोकलोचनादवधारणीयम्', इति ध्वन्यालोकलोचनस्योल्लखात् तस्य पूर्वनिर्मितिः सुतरां प्रकाशिता। अत्र हि ग्रन्थे सर्वानपि ध्वनिविरोधिनस्तर्कान् समालोच्य प्रतीयमानार्थस्य संसिद्धये व्यञ्जनाव्यापारस्यावश्यकता बहुविधैः प्रमाणैः प्रमाणिताऽस्ति। अभिनवभारती भरतमुनिप्रणीतनाट्यशास्त्रस्यैकमात्रसमुपलब्धा टीकाऽस्ति। यद्यपि अद्यावधि तस्याः अविकलः पाठो नोपलब्धः। नाट्यशास्त्रस्यानुशीलने नितान्तमुपयोगिनी कृतिरियमाचार्यस्य।

साहित्यशास्त्रे अभिनवगुप्तस्य स्थानं व्याकरणशास्त्रे पतञ्जलिरिव वर्तते। वस्तुतः सत्यमिदं तथ्यं यद् अभिनवगुप्तं विना न सम्भवति साहित्यशास्त्र-प्रतिपत्तिः पारमार्थिकी।

## आचार्यमम्मटभट्टः ( १०५०-११०० ई० )

ध्वनिप्रस्थानस्यातिप्रमुखोऽयमाचार्यः। साहित्येऽतिप्रसिद्धस्य काव्यप्रकाशस्य दशमोल्लासान्तर्गतोदात्तालङ्कारे समुदाहृतेन पद्येन भोजराजस्य समुल्लेखादयं भोजराजपरवर्त्तीति ज्ञायते। भोजराजस्य शासनकालः ख्रीष्टीयसंवत्सरस्य ९९६ ई० तः १०५१ ई० संवत्सरं यावदासीदिति प्रमाणयन्ति ऐतिह्यविदः। ११५१ ख्रीष्टीयसंवत्सरस्य काव्यानुशासनकृता हेमचन्द्राचार्येण समुद्धृतो मम्मटः कदापि तदुत्तरवर्त्ती भवितुं नार्हति। अतः भोजराजहेमचन्द्र-योर्मध्यवर्त्ती मम्मटः सिद्ध्यते।

मम्मटस्य जीवनविषये किमप्यधिकं नास्ति विदितम्। नाम्ना कश्मीरदेशीयः सिद्ध एव। काव्यप्रकाशस्य सुधासागरटीकाकारेण भीमसेनेन स्वरचितैः कतिपयैः श्लोकैः मम्मटस्य प्रशस्तिः कृता। येनायं कश्मीरदेशीयस्य जैयटस्य पुत्र इति ज्ञायते।

**'शब्दब्रह्म सनातनं न विदितं शास्त्रैः क्वचित् केनचित्**
**तद्देवी हि सरस्वती स्वयमभूत् काश्मीरदेशे पुमान्।**

**श्रीमज्जैयटगेहिनीसुजठराज्जन्माप्य युग्मानुजः**
**श्रीमन्मम्मटसंज्ञया श्रिततनुं सारस्वतीं सूचयन्।।**

**मर्यादां किल पालयन् शिवपुरीं गत्वा प्रपठ्यादरात्**
**शास्त्रं सर्वजनोपकाररसिकः साहित्यसूत्रं व्यधात्।**
**तद्वृत्तिं च विरच्य गूढमकरोत् काव्यप्रकाशं स्फुटं**
**वैदग्ध्यैकनिदानमर्थिषु चतुर्वर्गप्रदं सेवनात्।।**

**कस्तस्य स्तुतिमाचरेत् कविरहो को वा गुणान् वेदितुं**
**शक्तः स्यात् किल मम्मटस्य भुवने वाग्देवतारूपिणः।**
**श्रीमान् कैयट औव्वटो ह्यवरजौ यच्छात्रतामागतौ**
**भाष्याब्धिं निगमं यथाक्रममनुव्याख्याय सिद्धिं गतौ।।'**[१]

आचार्यमम्मटप्रणीतं ग्रन्थद्वयमेवास्ति विदितम्। तत्र प्रथमः काव्यप्रकाशः, द्वितीयश्च शब्दव्यापारविचारः। काव्यप्रकाशः साहित्यशास्त्रस्य मूर्धाभिषिक्तः प्रौढतमो ग्रन्थः। दौर्भाग्यात् सम्पूर्णतया मम्मटेन न विरचितः केनाप्यन्येन पूरितः। काव्यप्रकाशस्य पुष्पिकायां पठितं पद्यमप्यस्य काव्यप्रकाशस्य युग्मकर्तृत्वमेव प्रतिपादयति।

**इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत्।**
**न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता संघटनैव हेतुः।।**[२]

माणिक्यचन्द्रेण व्याख्यातमिदं यत्– 'अथ चायं ग्रन्थोऽन्येनारब्धोऽपरेण च समापित इति द्विखण्डोऽपि संघटनावशादखण्डायते।' किन्तु काव्यप्रकाशस्य निदर्शनाटीकाकारस्य राजानकानन्दस्योल्लेखाज्ज्ञायते यद्– अवशिष्टांशः अल्लटेन पूरित इति। तद्यथा–

**'कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः।**
**ग्रन्थः सम्पूरितः शेषं विधायाल्लटसूरिणा।'**

---

१. काव्य. सुधासागरटीका प्रारम्भे, ४–६
२. काव्यप्र. अन्तिमश्लोकः

काव्यप्रकाशोऽयं ध्वनिप्रस्थापनाय विरचितः उत्कृष्टतमो ग्रन्थः। पूर्वाचार्यैः समालोचिताः सर्वेऽपि विषयाः सुसंस्कृत्यात्र सङ्कलिताः। अभिनवगुप्तसिद्धान्तसारं समाकलय्य तेषां प्रतिपादनेन संसृजत्यभिनवां काञ्चिद्विच्छितिं काव्यप्रकाशे मम्मटः। काव्यप्रकाशस्य समादरः समग्रविद्वत्समाजे परिदृश्यते। विविधसम्प्रदायदीक्षादीक्षितैः पण्डितैः सादरमुदाह्रियते ग्रन्थोऽयम्। अत एव विभिन्नपरम्पराप्रवीणैः विभिन्ना टीकाऽपि कृता। व्याकरणशास्त्रमूर्धन्यो मञ्जूषाकारोऽपि प्रामाणिकत्वेनोद्धरति पण्डितमम्मटभट्टं स्वकीये मञ्जूषाग्रन्थे। रसगङ्गाधरकारः पण्डितराजोपि स्वरससिद्धान्तं समर्थयति मम्मटस्य मतमुल्लिख्य, 'तथा चाहुः-

**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।**[१] इति

प्रायः उत्तरवर्त्तिभिः सर्वैः साहित्यशास्त्रधुरीणैः मम्मटस्य यथावसरं समुल्लेखः कृत्तः।

ध्वनिविरोधिनां सर्वेषामाचार्याणां मतानि दूषयित्वा ध्वनिसंस्थापनं च विधाय व्यञ्जनाया अपरिहार्यता न केवलं साहित्यशास्त्रेऽपितु पदवाक्यप्रमाण-दिशास्त्रेष्वपि प्रदर्शिताऽचार्यमम्मटेन। सर्वथा न्यक्कृतो महिमभट्टस्यानुमितिवादः। अयमेवास्ति अवदानविशेषो मम्मटस्य साहित्यशास्त्रे संक्षेपतः। अस्य विषयप्रतिपादनशैली त्वनुपमैव, बहुप्रतिपाद्यविषयवस्त्वपि स्वल्पाक्षरैः प्रस्तौति, अक्षरमात्रमपि तात्पर्यप्रकाशनाय संचिनोति न त्वन्यथा। विदितसकल-शास्त्रोऽप्ययं मुख्यतो वैयाकरणः प्रतीयते। फलतः व्याकरणशास्त्रसिद्धान्ताः पदे पदे परिस्फुरन्ति काव्यप्रकाशे। मम्मटात् पूर्वम् अलङ्कारशास्त्रस्य विभिन्ना विषया विविधेषु ग्रन्थेषु समालोचिता आसन्। सर्वप्रथमम् अनेनैव महात्मना अलङ्कारशास्त्रीयाः सर्वेऽपि विषयाः क्रमिकरूपेण सुसम्पाद्य एकस्मिन् ग्रन्थे प्रतिपादिताः। अतो व्यवस्थितं काव्यशास्त्रं प्रथमतो मम्मटेनैव प्रणीतमिति शक्यते वक्तुम्।

---

१. रस. १, आनेन, रसप्रकरणम्

**कविराजविश्वनाथः ( १३००-१३८० ई० )**

उत्कलप्रदेशे लब्धजन्मा महाकविचन्द्रशेखरसूनुः विश्वनाथो ध्वनिसम्प्रदायस्य विश्रुत आचार्यः। अनेन सर्वेषां साहित्यशास्त्रीयविषयाणां सारल्येन प्रतिपादनार्थं साहित्यदर्पणः प्रणीतः। अयं साहित्यदर्पणो दृश्य-श्रव्योभयकाव्यस्यैकत्रप्रतिपादनात् अतिशेते सर्वानपि काव्यशास्त्रीयग्रन्थान्। निश्चितरूपेण साहित्यशास्त्रे सन्ति प्रसिद्धा अनेके ग्रन्थाः किन्तु व्यापकविषयवस्तुसङ्कलनदृष्ट्या सरल-सुललितपदावल्या च न कोपि ग्रन्थः साहित्यदर्पणस्य तुलनाकोटिमधिरोहति।

साहित्यदर्पणस्य चतुर्थपरिच्छेदे 'अलावुद्दीन' नामकस्य यवनराज-स्यास्ति समुल्लेखः तद्यथा-

**सन्धौ सर्वस्वहरणं विग्रहे पाणिनिग्रहः।**
**अलावद्दीनृपतौ न सन्धिः न च विग्रहः।।**[1]

अनेन ततः परवर्त्तिता विश्वनाथस्य सिद्धा। ईसवीयसंवत्सरस्य चतुर्दशशतके समुद्भूतो मल्लिनाथो नैषधस्य 'जीवातु' -टीकायामनेकशः समुद्धरति विश्वनाथमतम्। अतः ततः पूर्ववर्त्तिताऽभ्युपपन्ना विश्वनाथस्य। एतदाकलनेन ईसवीयसंवत्सरस्य चतुर्दशशतक एव विश्वनाथस्य स्थितिकालो निष्पन्नो भवति।

विश्वनाथेन प्रणीता ग्रन्थाः- १. प्रभावतीपरिणयम्, २. चन्द्रकला, ३. राघवविलासम्, ४. नरसिंहविजयम्, ५. कंसवधम्, ६. कुवलयाश्वचरितम्, ७. प्रशस्तिरत्नावली, ८. काव्यप्रकाशदर्पणः, ९. साहित्यदर्पणश्च सन्ति।

अस्य पितामहोपि सुप्रसिद्धः कविरासीदिति तस्य समुल्लेखात् ज्ञायते-

'श्रीकलिङ्गभूमण्डलाखण्डलमहाराजाधिराज-श्रीनरसिंहदेवसभायां धर्मदत्तं स्थगयन्तः सकलसहृदयगोष्ठीगरिष्ठकविपण्डितास्मत्पितामह-श्रीमन्नारायणदासपादाः'

---

१. सा. द. ४.१४ वृ.

तथैव काव्यप्रकाशटीकाकर्तुश्चण्डीदासस्यास्ति समुल्लेखः साहित्यदर्पणे – इहास्मत्पितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादैरुक्तम् साहित्यदर्पणस्य प्रथमपरिच्छेदस्य पुष्पिकात्रविशेषावधानेन समालोकनीया– 'इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थानपर–माचार्यकविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र–श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे काव्यस्वरूपनिरूपणो नाम प्रथमः परिच्छेदः[१] अनेनायं विश्वनाथो ध्वनिप्रस्थानस्य परमाचार्येण ख्यातो महान् वैष्णवपण्डितः, सान्धिविग्रहिकपदे नियुक्तः राजपण्डित आसीदिति सम्प्रतिपत्तिः। तत्रैवाष्टादशभाषावारविलासिनीभुजङ्ग इति विशेषणेन तथा प्रशस्तिरत्नावलीगतभाषावैशिष्ट्येनाप्यस्यास्ति भाषापाण्डित्यं प्रकाशितम्।

**पण्डितराजजगन्नाथः (१६००–१६७५)**

साहित्यशास्त्रस्योत्तरवर्त्तियुगे रसगङ्गाधरकर्तृत्वेन पण्डितराजजगन्नाथोऽतीव प्रसिद्धः। जात्याऽयं तैलङ्गब्राह्मणः, येनान्ध्रदेशीयः सिद्धः। अनेन प्रायः सम्पूर्णं स्वयौवनं यवनसम्राजः 'शाहजहां इतिख्यातस्य राजसभायामेव व्ययीकृतम्। 'दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः' इति वचनाज्ज्ञायते। तत्र राजसभायामासीदस्यानुपमप्रणयिनी काचिल्लवङ्गी यवनकन्या। यया सह पण्डितराजस्यात्युत्कर्षः प्रणयप्रसङ्गो जात इति लोकोक्तिः। तत्सम्बन्धिन्य सन्त्युक्तयः पण्डितराजस्य। प्रथा–

**'न याचे गजालिं न वा वाजिराजिं न वित्तेषु चित्तं मदीयं कदाचित्।**
**इयं सुस्तनी मस्तकन्यस्तकुम्भा लवङ्गी कुरङ्गीदृगङ्गीकरोतु।।'**

तथा,

**'यवनी नवनीतकोमलाङ्गी शयनीये नीयते कदाचित्**
**अवनीतलमेव साधु मन्ये न वनी माधवनी विनोदहेतुः।**

१. सा.द. १ पुष्पिका

**यवनी रमणी विपदः शमनी कमनीयतया नवनीतसमा**
**उहि-ऊहिवचोमृतपूर्णमुखी स सुखी जगतीह यदङ्कगता।।'**

**दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः।**
**अन्येन केनापि नृपेण दत्तं शाकाय वा स्याल्लवणाय वा स्यात्।।**

इति ब्रुवता तेन दिल्लीश्वरे भक्तिः प्रदर्शिता। अतः शाहजहां-नाम्नः यवन-शासकस्य काल एव तस्यापि स्थितिकालः। ईसवीयसंवत्सरस्य १६२८ तमे वर्षे शाहजहां सम्राज्पदेऽभिषिक्तः तथा ईसवीयसंवत्सरस्य १६६६ तमे वर्षे उपरतः। अतः ईसवीयसंवत्सरस्य सप्तदशशताब्दी एव पण्डितराजस्य जीवनसमयो निश्चीयते। पण्डितराजेन विश्वनाथपुरीं गत्वा विविधशास्त्राणामध्ययनं सम्पादितम्। अनेन वेदान्तशास्त्रं ज्ञानेन्द्रभिक्षोः सकाशादधीतम्। महेन्द्राख्याद् विदुषः न्यायवैशेषिकशात्रद्वयमधीतम्। मीमांसाशास्त्रं खण्डदेवोपाध्यायात्, पातञ्जलमहाभाष्यञ्च शेषवीरेश्वरपण्डितादधीतम्। सर्वविद्याधरस्य पेरुभट्टस्यायं पुत्रः लक्ष्मीदेवी चास्य माता। एतत्तथ्यं रसगङ्गाधरस्य प्रारम्भिकपद्याभ्यां तेनैव सूचितम्।

**श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः**
**काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।**
**देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं**
**शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः।।**[1]

**पाषाणादपि पीयूषं स्यन्दते यस्य लीलया।**
**तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम्।।**[2]

**पण्डितराजप्रणीता ग्रन्थाः**

१. भामिनीविलासः, २. गङ्गालहरी,
३. करुणालहरी, ४. अमृतलहरी,
५. लक्ष्मीलहरी, ६. आसफविलासकाव्यम्,

---

१. रस. प्रथमे आनने पृ. २
२. तत्रैव, प्रथमे आनने पृ. २

| | |
|---|---|
| ७. जगदाभरणम्, | ८. प्राणाभरणम्, |
| ९. सुधालहरी, | १०. यमुनावर्णनचम्पूः, |
| ११. मनोरमाकुचमर्दिनी | १२. रसगङ्गाधरः। |

तेन प्रणीतेषु ग्रन्थेष्वस्ति कश्चिदनितरसाधारणो गुणविशेषः किन्तु रसगङ्गाधरस्य किमप्यपूर्वमेवास्ति वैशिष्ट्यम्। विशिष्टां शैलीमाश्रित्य सिद्धान्तयति पण्डितराजः स्वमन्तव्यम्। अपेक्षितान्येव पदान्युपादाय स्ववक्तव्ये तादृशी दृढता संपाद्यते यत्रैकमपि पदं न सन्दिग्धं, नाधिकं, न न्यूनं, नार्थबोधने परापेक्षितम्। युगीनः खल्वयं प्रभावः। नव्यन्यायप्रभावात् तादृशी भाषा संघटिता तेन यत्र न तिलमात्रस्यापि इतस्ततः परिवर्तनं शक्यसंभवम्। अन्यथा पदे पदे संनिहितः प्रतिवादी त्वरितमेव निर्दयतया मर्दयेत्। प्रस्तावनायामेव प्रतिपादितं पण्डितराजेन यत्–

मया सर्वानपि पूर्वान्निबन्धानन्तस्तलतया विचार्य तादृशेन सुदृढेन मननेन सोऽयं ग्रन्थो रचितो येन न कोऽप्यत्र दोषं गवेषयितुमवकाशो लभ्येत, प्रत्युत अस्याग्रे सर्वेऽपि पुरातनाः निबन्धाः निष्प्रभाः प्रतीयेरन्।

**निमग्नेन क्लेशैर्मननजलधेरन्तरुदरं**
**मयोन्नीतो लोके ललितरसगङ्गाधरमणिः।।**
**हरन्नन्तर्ध्वान्तं हृदयमधिरूढो गुणवता–**
**मलङ्कारान्सर्वानपि गलितगर्वान्रचयतु।।**[1]

पूर्वैः साहित्याचार्यैः प्रतिपादिता विषयाः केनाप्यभिनवपथा समीक्षिताः। काव्यस्य चत्वारो भेदाः प्रतिपादिताः। काव्यकारणत्वेन केवलं प्रतिभैवाङ्गीकृता। रसस्य स्वरूपं दार्शनिकविधया विवेच्य तत्रैकादश मतानि वर्णितानि। प्राचीनैः स्वीकृतानां दशगुणानां विशदं विवेचनं कृतम्। पूर्वैरसंलक्ष्यक्रमतया प्रतिपादितानां रसभावादीनामत्र संलक्ष्य–क्रमत्वमप्यस्ति संपादितम्। उदाहरणत्वेन स्वकीयानि पद्यान्येव पठति पण्डितराजः। प्रारम्भे तेनोद्घोषितं यत्–

---

१. रस. प्रथमे आनने पृ. २

**निर्माय नूतनमुदाहरणानुरूपं**
**काव्यं मयात्र निहितं न परस्य किञ्चित्।**
**किं सेव्यते सुमनसां मनसापि गन्धः**
**कस्तूरिकाजननशक्तिभृता मृगेण।।**[1]

अतः साहित्यशास्त्रस्य पुरातनं सर्वमपि विषयजातं व्यञ्जना-विमर्शनिकषेण प्रस्फुटं परिष्कुर्वता पण्डितराजेन ध्वनिप्रस्थानं दृढीकृतमित्यलम्।

१. रस. प्रथमे आनने पृ. ३

### द्वितीयो भागः

## ध्वनिविरोधिन आचार्याः तेषां च सिद्धान्ताः

ध्वनिं प्रत्याचक्षाणानामाचार्याणां विमतिपथपतितो व्यञ्जनाव्यापार एव न तु ध्वनिनाम्ना व्यपदिष्टः सहृदयहृदयसर्वस्वभूतः प्रतीयमानार्थः। अतएव ध्वनिवादिभिः प्रतिपादितायाः व्यञ्जनाख्यायाः शब्दशक्तेः अन्तर्भावम् अभिधायां, लक्षणायां, तात्पर्यवृत्तौ, अनुमितौ वा प्रतिपादयन्ति ध्वनिविरोधिन आचार्याः, परं व्यञ्जनासंवेद्यं तत्त्वं प्रतीयमानार्थरूपं तु तैर्न प्रत्याक्षिप्तम्। आनन्दवर्धनस्य ध्वनिसंस्थापनादनन्तरं ये प्रबला ध्वनिविरोधिनः सञ्जातास्तेषु मुकुलभट्टः प्रतीहारेन्दुराजः, भट्टनायकः, धनञ्जयधनिकौ, कुन्तकः, महिमभट्टः, भोजराजश्च प्रमुखाः सन्ति। अत एतेषामाचार्याणां सिद्धान्तपरिशीलनमेकैकशः संक्षिप्तविधिना विधीयतेऽत्र।

**आचार्यमुकुलभट्टः ( ८८३-९२४ ई० )**

प्राय आनन्दवर्धनस्य समसमयोथवा किञ्चित्परवर्त्ती मुकुलभट्टः प्रतिभाति। अस्य पितुर्नामासीत् कल्लटभट्ट इति। मुकुलभट्टः स्वयमेवाभिधा–वृत्तमात्रिकाया अन्तिमे पद्ये पितुर्नाम्ना सहैव स्वानामोल्लेखः कृतः।

**भट्टकल्लटपुत्रेण मुकुलेन निरूपिता।**
**सूरिप्रबोधनायेयमभिधावृत्तमात्रिका।।**[१]

मुकुलस्य पितुर्नाम्ना सह नामोल्लेखः सूचयति तथ्यविशेषं कमपि। यतो हि काश्मीरकेषु नास्ति पितुर्नाम्ना सह स्वनामग्रहणपरम्परा यथा दाक्षिणात्येषु। कल्हणस्य राजतरङ्गिणीपद्येन ज्ञायते यदयं कल्लटभट्टः सिद्धपुरुष आसीत्।

**अनुग्रहाय लोकानां भट्टश्रीकल्लटादयः।**
**अवन्तिवर्मणः काले सिद्धा भुवमवारतन्।।**[२]

१. अ.वृ.मा. १५
२. राजत. ५.५६

शैवपरम्पराया अध्ययनेनापि तथ्यमिदं प्रकाश्यते यत् कल्लटभट्टः प्रसिद्धः शैवशास्त्रमर्मज्ञ आसीत्। तस्य वैदुषी सम्पूर्णे कश्मीरप्रान्ते परिव्याप्तासीत्। शैवगामे स्पन्दकारिकाकर्तृत्वेनास्ति तेषां ख्यातिः।

**दृब्धं महादेवगिरौ महेशवप्रोपदिष्टाच्छिवसूत्रसिन्धोः।**
**स्पन्दामृतं यद् वसुगुप्तपादैः श्रीकल्लटस्तत्प्रकटीचकार।।**

अस्माद्धेतोः मुकुलभट्टेन लब्धप्रतिष्ठस्य पितुर्नामोल्लेखेन सह स्वनाम गृहीतम्। उद्भटकाव्यालङ्कारसारसंग्रहस्य लघुविवृत्तिकारः प्रतीहारेन्दुराज आसीत्मुकुलभट्टस्य शिष्यः। तस्य पद्येन तद्गुरोर्मुकुलभट्टस्य चतुरस्रम् आचार्यत्वं प्रतीयते।

**मीमांसासारमेघात् पदजलधिविधोस्तर्कमाणिक्यकोशात्**
**साहित्यश्रीमुरारेर्बुधकुसुममधोः शौरिपादाब्जभृङ्गात्॥**
**श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात् कीर्तिवल्ल्यालवालात्**
**काव्यालङ्कारसारे लघुविवृतिमधात् कौङ्कणः श्रीन्दुराजः॥**

एवं मकुलभट्टस्य पितुरवन्तिवर्मणः कालेऽवस्थानाद् आनन्दवर्धनेन सह तस्य समसामयिकताऽभ्युपपन्ना भवति। आनन्दवर्धनस्य समक्षं मुकुलभट्टस्य शैशवमासीदिति वक्तुं शक्यते। अत आनन्दवर्धनात् किञ्चित्परवर्तितामङ्गीकृत्य ईसवीयसंवत्सरस्य ८८३ ई० तः ९२५ ईं यावन्मुकुलभट्टस्य काल इत्युत्प्रेक्षितुं शक्यते।

मुकुलभट्टस्य एकमात्रग्रन्थोऽभिधावृत्तमात्रिका समुपलभ्यते। लघुकायोऽयं ग्रन्थः। सम्पूर्णे ग्रन्थे पञ्चदश कारिकाः सन्ति केवलम्। शरीरदृष्ट्या लघुरूपोप्ययं ग्रन्थो विचारदृष्ट्याऽतीवप्रौढोऽस्ति। ग्रन्थे मुख्यत्वेनाभिधायाः सप्रपञ्चं प्रतिपादनमस्ति। अभिधालक्षणाव्यापारविषयकस्य मम्मटसिद्धान्तस्य अभिधावृत्तमात्रिकाग्रन्थ एव मुख्यं स्रोतः। कारिकाणां वृत्तिरपि मुकुलभट्टेन स्वयं कृता।

## मुकुलभट्टाभिमतोऽभिधाव्यापारः

मुकुलभट्टः एकामेव शब्दवृत्तिमङ्गीकरोति सा च अभिधा। स

मुख्यामुख्यत्वेनाभिधाया भेदद्वयं प्रतिपादयति। शब्दव्यापारतो यस्य प्रतीतिः स मुख्यः, अमुख्यस्तु अभिधेयार्थसाहाय्येन परिस्फुरति, अस्यैव लक्षणेति नामान्तरम्।

**शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।**
**अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते।।**[१]

अतस्तन्मतेन मुख्यो व्यापारोऽस्ति अभिधाव्यापारः। अभिधेयार्थप्रतीतिः साक्षात् शब्दव्यापाराज्जायते एवं तद्भिन्नस्यामुख्यार्थस्य प्रतीतिरभिधेयार्थ-सहकारितया समुपजायते। इदमेवास्ति मुख्यं पार्थक्यमुभयोः। एको मुख्यः अपरश्च अमुख्यः। तत्र मुख्यामुख्यत्वेऽस्ति कारणमुपपादितं मुकुलभट्टेन–'स हि यथा सर्वेभ्यो हस्तादिभ्योऽवयवेभ्यः पूर्वं मुखमवलोक्यते, तद्वदेव सर्वेभ्यः प्रतीयमानेभ्योऽर्थान्तरेभ्यः पूर्वमवगम्यते। तस्मान्मुखमिव **मुख्य** इति शाखादियान्तेन मुख्यशब्देनाभिधीयते। यथा गौरनुबन्ध्य इति। अत्र हि गोशब्दव्यापाराद् यागसाधनभूता गोत्वलक्षणजातिरवगम्यते। अतस्तस्यामुख्यता। तदेवं शब्दव्यापारगम्यो मुख्योऽर्थः।'

यस्य तु शब्दव्यापारगम्यार्थपर्यालोचनयावगतिस्तस्य लाक्षणिकत्वम् अमुख्यत्वं वा शब्दान्तरम्। यथा गौरनुबन्ध्य इत्यत्र गोव्यक्तेः प्रतीतिः। सा हि न शब्दव्यापारादवसीयते, 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायात् शब्दस्य जातिमात्रपर्यवसितत्वात्। जातिस्तु व्यक्तिमन्तरेण यागसाधनभावं न प्रतिपद्यते इति शब्दप्रत्यायितजातिसामर्थ्यादत्र जातेराश्रयभूता व्यक्तिराक्षिप्यते। तेनासौ लाक्षणिकी। एवमयं मुख्यलाक्षणिकात्मविषयोपवर्णनद्वारेण शब्द-स्याभिधाव्यापारो द्विविधः प्रतिपादितो **निरन्तरार्थविषयः सान्तरार्थनिष्ठश्च।'**

सारांशस्त्वयमेव, यत् साक्षाच्छब्दव्यापार स निरन्तरार्थविषयः अभिधाव्यापारः **मुख्यः,** यश्च अभिधेयार्थसहकारितया अन्यार्थस्य प्रतीतिः स सान्तरार्थनिष्ठः अभिधाव्यापारः **अमुख्यः,** तस्यैव च लाक्षणिकत्वम्।

---

१. अ. वृ. मा. १

**मुख्यश्चतुर्विधः**

मुख्यामुख्यत्वेनाभिधालक्षणयोः स्वरूपं प्रतिपाद्य मुख्याभिधाव्यापारस्य भेदचतुष्टयं तेन व्याहृतम्।

**'तत्र मुख्यश्चतुर्भेदो ज्ञेयो जात्यादिभेदतः।'**[१]

अर्थात् जात्यादिभेदतो मुख्यार्थश्चतुर्विधो भवति। 'चतुष्टायी शब्दानां प्रवृत्तिरिति महाभाष्यकार-वचनमादाय जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाः व्यक्तेरुपाधिरूपेणाङ्गीकृतास्तेन। उपाधिधर्मेणैव शब्दानां परस्परं भिन्नविषयत्वप्रतीतिरिति व्याहरता तेन उपाधयः सविशेषं परामृष्टाः। उपाधिस्तु द्विविधः- वक्तृसंनिवेशितः वस्तुधर्मश्च। वक्तृसंनिवेशितो यथा- 'डित्थादीनां शब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपम्। तत् खलु तां तामभिधाशक्ति-मभिव्यञ्जयता वक्त्रा यदृच्छया तस्मिंस्तस्मिन् संज्ञिनि उपाधितया संनिवेश्यते। अतः तन्निबन्धना यदृच्छाशब्दा डित्थादयः।' वस्तुधर्मोपि द्विविधः साध्यः सिद्धश्च। साध्योपनिबन्धनास्तत्र क्रियादिशब्दाः, यथा पचतीति। सिद्धोऽपि द्विविधः जातिगुणभेदात्। कस्यचित् खलु सिद्धस्योपाधेः पदार्थस्य प्राणप्रदता, यथा जातेः। न हि कश्चित् पदार्थो जातिसम्बन्धमन्तरेण स्वरूपं प्रतिलभते, अत्र प्रमाणत्वेन तेन वाक्यपदीयस्य पङ्क्तिः गोत्वाभिसम्बन्धात्तु गौः इति। गुणस्तु कश्चित्पुनरुपाधिलब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुः यथा शुक्लादिर्गुणः। न हि शुक्लादेर्गुणस्य पटादिवस्तुस्वरूपप्रतिलम्भनिबन्धनत्वम्, जातिमहिम्नैव तस्य वस्तुनः प्रतिलब्धस्वरूपात्। अतोऽसौ लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुः। तदेवं प्राणप्रदोपाधिनिबन्धनत्वं यस्य शब्दस्य स जातिशब्दः यथा गवादिः यस्माल्लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुरर्थः प्रतीयते स गुणशब्दो यथा शुक्लादिः।

मुकुलभट्टेन जातिवादिनां पक्षः भृशं दूषितः। तेनोक्तं यत् सर्वेषां गुणक्रियायदृच्छाशब्दानां जातिनिबन्धनत्वं यत्केषाञ्चिदभिमतं तत्तु न युक्तियुक्तम्। यतो हि 'गुणक्रियाशब्दसंज्ञिव्यक्तीनामेव तत्तदुपाधिनिबन्धनभेदजुषामेकाकारता-

---

१. अ. वृ. मा. २

वगतिनिबन्धनत्वम् न तु जातेरिति भगवतो महाभाष्यकारस्यात्राभिमतम्। यथा हि एकमेव मुखं तैलखड्गोदकादर्शादीनां प्रतिबिम्बावगतिनिबन्धनानां भेदान्नानाकारत्वेन प्रत्यवभासते तथैकैव शुक्लादिव्यक्तिर्देशकालावच्छिन्ना तत्तत्कारणसामग्र्युपजनितशङ्खाद्याश्रयविशेषवशेन नानारूपतयाभिव्यक्तिमा- सादयन्ती विचित्रेव स्यादिति। अतः तस्याः शुक्लादिव्यक्तेरेकत्वाज्जातेश्च भिन्नाश्रयसमवेतत्वात् शुक्लत्वादिजात्यभावान् न शुक्लादिशब्दानां जातिशब्दत्वम्। अतः शब्दप्रवृत्तिनिमित्तानां चातुर्विध्यात् मुख्यः शब्दार्थः चतुर्विध इति।

### अमुख्योऽभिधाव्यापारः ( लक्षणाव्यापारः )

यत्राभिधेयस्य सहकारितायाऽमुख्योऽर्थः प्रतीयते तत्र लक्षणानाम्नी शब्दस्य अमुख्या शक्तिर्भवति। नेयमर्थशक्तिः, अवश्यं तत्रार्थस्य सहकारिता। अतएव सान्तरार्थनिष्ठोऽयं शब्दव्यापार इति मुकुलभट्टस्य प्रतिपत्तिः। मम्मटोऽपि 'आरोपिता क्रिया'[१] इति व्याहरति। अस्य द्वौ भेदौ, शुद्धत्वादुपचारमिश्रत्वाच्च।

### १. शुद्धालक्षणा–

यत्र मुख्यार्थ एव नोपद्यते। अतोभिधेयार्थसम्बद्धस्यार्थस्य लक्षणया बोधः। तत्र शुद्धा लक्षणा। यथा 'गङ्गायां घोषः' अत्र हि घोषं प्रति स्रोतोविशेषस्य आधारता नोपपन्ना भवति, अतः गङ्गाशब्दः स्वाभिधेयस्य स्रोतोविशेषस्य यः समीपभूतस्तटः तं लक्षणयावगमयति। इयं शुद्धा लक्षणाऽपि द्विविधा भवति। १. उपादानलक्षणा २. लक्षणलक्षणा

**उपादानाल्लक्षणाच्च शुद्धा सा द्विविधोदिता।**
**स्वसिद्ध्यर्थतयाक्षेपो यत्र वस्त्वन्तरस्य तत्।।**[२]

### उपादानलक्षणा–

यत्र स्वसिद्ध्यर्थतया वस्त्वन्तरस्याक्षेपो भवति तत्रोपादानलक्षणा भवति। यथा–'गौरनुबन्ध्यः' इति। अत्र हि गोत्वस्य यागं प्रति साधनत्वं शाब्दं

१. का. प. २
२. अ. वृ. मा. ३

व्यक्त्याक्षेपो भवति। यथा च 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति। अत्रापि पीनत्वं दिनाधिकरणभोजनाभावविशिष्टतयावगम्यमानमेव कार्यत्वात् स्वसिद्ध्यर्थत्वेन कारणभूतं रात्रिभोजनम् आक्षिपति। अत्र शब्दाक्षेपपूर्वकतया प्रमाणस्य अपरिपूरणस्य परिपूरणात् श्रुतार्थापत्तित्वं भवतु अथवा कारणस्यैव रात्रिभोजनस्य आक्षेप इति सर्वथा स्वसिद्ध्यर्थत्वेनार्थान्तरस्याक्षेपपूर्वकतयान्तर्भावनादुपादानत्वमुपपद्यते इति मुकूलभट्टस्य मन्तव्यम्।

**लक्षणलक्षणा-**

यत्र अर्थान्तरसिद्ध्यर्थत्वेन स्वार्थस्य समर्पणं भवति तत्र लक्षणलक्षणा। यथा-गङ्गायां घोषः। अत्र अर्थान्तरभूतं तटमवगमयितुं गङ्गाशब्देन स्ववाच्यभूतः स्रोतोविशेषोऽत्र समर्प्यते इति अर्थान्तरसिद्ध्यर्थत्वेन स्वार्थसमर्पणात्मिका लक्षणलक्षणा।

**२. सोपचारा लक्षणा-**

यत्र वस्त्वन्तरं वस्त्वन्तरे उपचर्यते तत्र सोपचारा लक्षणा भवति। यथा गौर्वाहीकः। अत्र हि गोशब्दो वाहीकशब्देनानुपद्यमानसमानाधिकरण्याद् बाधितमुख्यार्थः सन्, गोगतजाड्यमान्द्यादिगुणसदृशवाहीकगतजाड्यमान्द्यादिगुणलक्षणाद्वारेण, गोगतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादिगुणोपेते वाहीके उपचरितः। तेनेयमुपचारमिश्रा लक्षणा जातेति मुकुलभट्टस्य सिद्धान्तः। सोपचारा लक्षणा चतुर्विधा भवति।

**आरोपाध्यवसानाभ्यां शुद्धगौणोपचारयोः।**
**प्रत्येकं भिद्यमानत्वादुपचारश्चतुर्विधः॥**[1]

उपचारस्तु शुद्धगौणभेदाभ्यां प्रथमं द्विविधः तथा आरोपाध्यवसानाभ्यां सहितस्तु चतुर्विधो भवति।

**१. शुद्धोपचारः**

यत्र मूलभूतस्य उपमानोपमेयभावस्य अभावेन उपमानगतगुणसादृश्यगुणयोगलक्षणासंभवात् कार्यकारणभावादिसम्बन्धाल्लक्षणया वस्त्वन्तरे

१. अ.वृ.मा. ४-५

वस्त्वन्तरमुपचर्यते। आरोपाध्यवसानाभ्यामयमुपचारो द्विविधो भवति १. शुद्धः सारोपः २. शुद्धः साध्यवसानश्च।

**शुद्धोपचारा सारोपा लक्षणा–**

यत्र वस्त्वन्तरं वस्त्वन्तरे अध्यारोप्यारोपविषयोर्भेदम् अनपह्नुत्यैवो-पचर्यते तत्रानपह्नुतस्वरूप एव वस्त्वन्तरे वस्वन्तरस्य अधिकस्यारोप्यमान-त्वादध्यारोपः। यथा– 'आयुर्घृतम्' अत्र आयुषः कारणे घृते तद्गतकार्य-कारणभावात् लक्षणापूर्वकत्वेनायुष्ट्वं कार्यं तच्छब्दः (आयुः) चेत्युभयमु-पचरितम्। उभयोरनपह्नुत्यैवोपयर्चमाणत्वादियं शुद्धा सारोपालक्षणा।

**शुद्धोपचारा साध्यवसाना लक्षणा**

यत्र तूपचर्यमाणविषयस्पोपचर्यमाणेऽन्तर्लीनतया विवक्षिततत्वात् स्वरूपाह्नवः क्रियते तत्राध्यवसानं भवति। कार्यकारणभावसम्बन्धादध्यवसानं यत्र, तत्र शुद्धा साध्यवसाना लक्षणा भवति। यथा– 'पञ्चाला' इति। अत्र पञ्चालापत्यनिवासाधिकरणत्वाज्जनपदे लक्षितलक्षणया पञ्चालशब्दः प्रयुज्यते। पञ्चालेनापत्यानां लक्षणाद्, अपत्यैश्च स्वनिवासाधिकरणस्य जनपदस्य। न चात्रोपयर्चमाणार्थविषयस्योपयर्चमाणाद् भेदेन प्रतिपत्तिः उपचर्यमाणार्थ-निगीर्णतयैव तस्य प्रतिपत्तेः। अतोऽत्राध्यवसानगर्भः शुद्धोपचारः।

**२. गौणोपचारः**

यत्र मूलभूतोपमानोपमेयभावसमाश्रयेण उपमानगतगुणसदृशगुण-योगलक्षणां पुरस्सरीकृत्योपमेय उपमानशब्दस्तदर्थश्चाध्यारोप्यते स हि गुणेभ्य आगत इति गौणशब्देनाभिधीयते। आरोपाध्यवसानभेदाभ्यामयमपि द्विविधः। १. सारोपो गौणोपचारः २. साध्यवसानो गौणोपचारश्च।

**गौणोपचारा सारोपालक्षणा साध्यवसाना लक्षणा च–**

यत्रोपमानगतगुणानामुपमेयस्योपरि आरोपः क्रियते तत्र गौणोपचारा सारोपा यथा गौर्वाहीकः यत्र तूपचर्यमाणविषयस्योपचर्यमाणेऽन्तर्लीनतया स्वरूपापह्नवः क्रियते तत्राध्यवसानं भवति। गुणसादृश्ययोगात् तत्र लक्षणायाः

गौणी साध्यवसाना भेदः समुपजायते। यथा– 'राजा' इति। राजशब्दो ह्यत्र प्रयोगदर्शनात् क्षत्रिये मुख्यया वृत्त्या प्रयुक्तः सन् शूद्रादौ क्षत्रियगतजनपद–परिपालनसदृश जनपदपरिपालनयोगलक्षणापूर्वकतया गौणवृत्त्या युज्यते। अतोऽत्राध्यवसानगर्भो गौण उपचारः। अतः लक्षणायाः एतेन चातुर्विध्येनोपचारेण सह पूर्वं प्रतिपादितायाः शुद्धाया द्वौ भेदौ संकलय्य षट् प्रकाराः निरूपिताः।

**लक्षणायाः भेदतालिका–**

**लक्षणा**

**शुद्धा**

१. उपादानलक्षणा (गौरनुबन्ध्यः)

२. लक्षणलक्षणा (गङ्गायां घोषः)

**सोपचारा**

**सारोपा**

३. शुद्धोपचारा सारोपा (आयुर्घृतम्)

४. गौणोपचारा सारोपा (गौर्वाहीकः)

**साध्यवसाना**

५. शुद्धोपचारा साध्यवसाना (पञ्चालाः)

६. गौणोपचारा साध्यवसाना (राजा)

एवं मुख्यार्थः चतुर्विधः षड्विधश्चामुख्यार्थः सर्वमाहत्य अभिधायाः दश भेदाः भवन्ति। **'इत्येतदभिधावृत्तं दशधाऽत्रविवेचितम्'**[१] इतिपङ्क्तेर–यमेवाशयो यद् मुख्यामुख्यत्वेनाभिधाव्यापारो दशविधो भवति। तेषां सर्वेषा भेदानामत्र पुनः परिगणनमधोलिखिततालिकया प्रस्तूयते।

**अभिधाव्यापारः**

**मुख्यः** १. जातिः

२. गुणः

१. अ.वृ.मा. १५

३. क्रिया

४. यदृच्छाशब्दः

**अमुख्यः** ५. उपादानलक्षणा (रूपः)

६. लक्षणलक्षणा (रूपः)

७. शुद्धोपचारा सारोपा लक्षणा (रूपः)

८. शुद्धोपचारा साध्यवसाना लक्षणा (रूपः)

९. गौणोपचारा सारोपा लक्षणा (रूपः)

१०. गौणोपचारा साध्यवसाना लक्षणा (रूपः)

**लक्षणायाः विषयविभागः**

लक्षणा अध्यारोपाद् अध्यवसानात् शुद्धत्वाच्च त्रिस्कन्धेति मुकुलभट्टेन प्रतिपादिता। तत्तेषां त्रयाणां स्कन्धानां विषयविभागं प्रदर्शयता तेनाभाणि यत्–

**तटस्थे लक्षणा शुद्धा स्यादारोपस्त्वदूरगे।**
**निगीर्णेऽध्यवसानं तु रूढ्यासन्नतरत्वतः।।**[१]

शुद्धा लक्षणा तटस्थे भवति। अर्थात् यत्र लक्षकात् लक्ष्यः अनुपरक्तः प्रतीयते। ताटस्थ्यं नाम भिन्नत्वेनोभयोः लक्ष्यलक्षकयोः प्रतीतिः। यथा 'गङ्गायां घोषः'। अत्र गङ्गाशब्दे प्रयुज्यमाने तटस्य स्रोतोविशेषेणोपलक्षकत्वमात्रोपयुक्त-त्वेनोपरागो न प्रतीयते, तटस्थत्वेनैव तटस्य प्रत्ययात्। एवं शुद्धायाः उपादान-भेदऽपि ताटस्थ्यप्रतीतिर्जायते।

यदा तु गङ्गाशब्दाभिधेयस्य जलप्रवाहस्य अदूरवर्त्तितया तटमनपह्नुत-स्वरूपं जलप्रवाहविशेषोपरक्ततया विवक्षितं भवति तदा अध्यारोपो भवति।

यदा तु अत्यन्तमासन्नतां घोषं प्रति स्रोतोविशेषस्य प्रतिपादयितुमेतद् वाक्यं स्रोतो विशेषनिगीर्णतया तटमपह्नुत्य प्रयुज्यते गङ्गायामेव साक्षाद् घोषः न त्वन्यत्रेति तदा अध्यवसानं भवति।

---

१. अ.वृ.मा. ५-६

अतः उभयोर्लक्ष्यलक्षकयोस्ताटस्थ्येन प्रतीतौ शुद्धा लक्षणा, उपरक्तस्य लक्ष्यस्य प्रतीतौ अध्यारोपः, अत्यन्तमासन्नतायां निगीर्णतया लक्ष्यस्य प्रतीतौ अध्यवसानम् इति त्रयो विषयभेदाः।

**लाक्षणिकार्थस्य सापेक्षता–**

लक्ष्यार्थो मुख्यार्थ इव निरपेक्षो न भवति अपितु स सापेक्षो भवति। तस्य किमपेक्षणीयम् इत्याशङ्कायां ब्रूते मुकुलभट्टो यत्–

**वक्तुर्वाक्यस्य वाच्यस्य रूपभेदावधारणात्।**
**लक्षणा षट्प्रकारैषा विवेक्तव्या मनीषिभिः।।**[१]

'स वक्ता, यः परप्रतिपत्तये वाक्यमुच्चारयति। साकाङ्क्षाणां पदानामेकार्थसमूहो वाक्यम्। शब्देन मुख्यं लाक्षणिकं वाभिधाव्यापरमाश्रित्य यद्गोचरीक्रियते तद्वाच्यम्। एतेषां त्रयाणां वक्त्रादीनां व्यस्तसमस्तभेदभिन्नानां देशकालावस्थावैलक्षण्यगतसमस्तव्यस्तभेदसंयोजितानां यः स्वभावभेदप्रपञ्चः तत् एषा षट् प्रकारा लक्षणा परामर्शकुशलैर्विवेचनीयाऽस्ति। तथाविधवक्त्रादिसामग्र्यापेक्षयैव शन्दानां स्वार्थमवगमयतां स्वार्थद्वारेण लक्ष्यमाणार्थसम्बन्धस्य वृद्धव्यवहारेणावधारितत्वात्। एतदुक्तं भवति– न शब्दानामनवधारितलाक्षणिकार्थसम्बन्धानां लाक्षणिकमर्थं प्रति गमकत्वम्, नापि च तत्र साक्षात्सम्बन्धग्रहणम्, किं तर्हि वक्त्रादि–सामग्र्यपेक्षया स्वार्थव्यवधानेनेति।' अतःपरं मुकुलभट्टेन **कुमारिलभट्टस्य** एका कारिकाऽपि समुदाहृता[२]–

**निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्।**
**क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः।।**

तत्र निरूढाया लक्षणाया उदाहरणं 'राजे'– त्यादिकम्। साम्प्रतं क्रियन्ते या वक्त्राद्यपेक्षया परिदृष्टस्वभावाः। यथा–

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना**
**वाता सीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**

१. अ.वृ.मा. ६–७
२. तत्रैव, वृत्तौ

**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव।।**[१]

अत्र हि लिप्तशब्दः कुङ्कुमादिवल्लेपनसाधनत्वाभावाद् बाधित-मुख्यार्थः, अतः तेन कान्तिसम्पृक्तोऽर्थो लक्ष्यते। एवं सुहृच्छब्देनापि पयोदानामचेतनत्वेन मैत्रीसम्बन्धाभावान्मुख्यशब्दार्थबाधे सति सुहृद्गता ये ये धर्माः तत्सदृशधर्मयोगतः पयोदाभिमुखा मयूरा लक्ष्यन्ते। रामशब्दस्यापि मुख्यार्थबाधः। अतस्तेनापि-राज्यभ्रंशवनवाससीतापनयनपितृमरणादयः स्वाभि-धेयभूतार्थैकगामिनाऽसाधारणदुःखहेतवो धर्मा विशिष्टसामग्र्यनुप्रविष्टेन लक्षिताः। अनेन प्रकारेण तेन लक्षणानां साम्प्रतं क्रियामाणता व्याख्याता।

**वक्तृनिबन्धनेन लाक्षणिकार्थपरिग्रहस्योदाहरणम्-**

**दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि**
**प्रायो नैष शिशोः पिताऽस्य विरसाः कोपीरपः पास्यति।**
**एकाकिन्यपि यामि तद् वरमितः स्रोतस्तमालाकुलं**
**नीरन्ध्रा वपुरालिखन्तु जरठच्छेदा नलग्रन्थयः।।**[२]

अत्र हि परपुरुषसंभोगानुभवेच्छया संकेतस्थानं युवतिर्व्रजन्ती स्वप्रवृत्तिप्रयोजनं विशिष्टसंकेतस्थानाधारं परपुरुषसंभोगात्मकं तथा संभोगचिह्नानि नखदशनक्षतानि गात्रसंलग्नतया शङ्क्यमानाविर्भावाणि अपह्नुत्याभिधत्ते। सा चापह्नुतिरसाध्या वक्तृत्वं पर्यालोच्यावगम्यते। तेनात्र वक्तृविशेषपर्यालोचनया सत्यर्थे निष्ठाया उपादानात्मिकाया लक्षणायाः प्रतिपत्तिर्मुकुलभट्टाभिमत्ता।

**वाक्यनिबन्धनेन लाक्षणिकार्थपरिग्रहस्योदाहरणम्-**

**प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या-**
**न्निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि।।**
**सेतुं बध्नाति भूयः विमिति च सकलद्वीपनाथानुयात-**
**स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः।।**[३]

१. अ.वृ.मा. ६-७
२. तत्रैव, वृत्तौ
३. तत्रैव, वृत्तौ

अत्र पुनः चाटुकश्लोकेनोपश्लोकयति कश्चित् कञ्चित् नृपतिम्। प्राप्तश्रीरित्यादिषु त्रिषु वितर्केषु भगवद्वासुदेवविषयेषु यथायोगं तत्तत्कार्य-निराकरणहेतुगर्भतया प्रवर्त्तमानेषु नृपतेर्भगवद्वासुदेवताऽऽक्षिप्ता, तेनात्रोपादाना-त्मिका लक्षणा। भगवद्वासुदेवरूपतया चात्र नृपतेरध्यवसानगर्भो गौण उपचारः। एतच्चात्र सर्ववाक्योपात्तपदसमन्वयान्यथानुपपत्त्यावगम्यते इति वाक्यनिबन्ध-नात्र लक्षणा मुकुलभट्टसम्मता।

**वाच्यनिबन्धनेन लाक्षणिकार्थपरिग्रहस्योदाहरणम्-**

**दुर्वारा मदनेषवो दिशि-दिशि व्याजृम्भते माधवो**
**हृद्युन्मादकराः शशाङ्करुचयश्चेतोहराः कोकिलाः।**
**उत्तुङ्गस्तनभारदुर्धरमिदं प्रत्यग्रमन्यद् वयः।**
**सोढव्याः सखि साम्प्रतं कथममी पञ्चाग्नयो दुःसहाः।।**[१]

अत्र हि स्मरशरप्रभृतीनामध्यारोपितवह्निभावानामसह्यत्वं वाक्यार्थी-भूतम्, अतस्तस्य वाच्यता। तात्पर्यलोचनसामर्थ्याच्च विप्रलम्भशृङ्गारस्याक्षेप इत्युपादानात्मिका लक्षणा वाच्यनिबन्धना। नह्यत्र वक्तृस्वभावपरिशीलनस्य शब्दरहितस्योपयोगः नापि च वाक्ये पदानां विप्रलम्भ-शृङ्गाराक्षेपमन्तरेणान्व-योपपत्तिः। वाच्यस्वरूपविचारेण तत्र विप्रलम्भशृङ्गाराक्षेपादुपादानात्मिका लक्षणा वाच्यनिबन्धना। विप्रलम्भशृङ्गारस्य चाक्षिप्यमाणस्यापि वाच्यापेक्षया चारुत्वम् इति मुकुलभट्टविचारसारः।

एवं मुकुलभट्टेन वक्तृवाक्यवाच्यानां समाश्रयेण लक्षणायाः भेदत्रयं सोदाहरणं प्रतिपाद्य पुनरेतेषां परस्परसंयोजनया अन्येऽपि चत्वारो भेदाः सम्भवन्तीति सूचितम्।

**अक्रियमाणा लक्षणा**

यासां तु लक्षणानां न वृद्धव्यवहारे दृष्टतया, न च तस्मिन् शब्दे राजशब्दवद्दर्शनम्, नापि च तज्जातीयेषु शब्दान्तरेषु लिप्तादिशब्दवत्, तासां लक्षणानामशक्यत्वादक्रियामाणत्वेमेव मुकुलभट्टेन प्रतिपादितम्। यथा-

१. अ.वृ.मा. ६ वृत्तौ

**मध्येसमुद्रं कुकुभः पिशङ्गीर्या कुर्वती काञ्चनभूमि-भासा।**
**तुरङ्ग-कान्तानन-हव्यवाह-ज्वालेव भित्त्वा जलमुल्ललास।।**[१]

पद्यं समालोचयता मुकुलभट्टेनोक्तं यद् 'अत्र हि तुरङ्गकान्तानन-हव्यवाह'-शब्दो वडवामुखाग्नौ लक्षणया प्रयुक्तः। न चासौ वडवामुखाग्नौ निरूढः, नापि च तज्जातीयः शब्दो विशिष्टसामग्र्यनुप्रविष्टतया विद्धाविद्धार्था-वगाहित्वेन परिदृष्टः।' फलतः एवंविधा लक्षणा त्याज्या। द्विरेफशब्दस्य व्यवहारं परिगृह्य तेन पूर्वपक्षः समुपस्थापितो यत् 'ननु-द्विरेफादीनां शब्दानां रेफद्वितयानुगत-भ्रमरादि-शब्द-लक्षणाद्वारेण यथा षट्पदादौ प्रवृत्तिः तथा तुरङ्गकान्ताननहव्यवाहशब्दस्यापि वडवामुखाग्नौ वडवादिशब्दलक्षणाद्वारेण कथं प्रवृत्तिर्न स्यात्, तज्जातीये द्विरेफादौ शब्दलक्षणायाः परिदृष्टत्वात्।

नैतत्, यतो वृद्धव्यवहाराभ्यनुज्ञातेष्वेव शब्देषु तज्जातीयशब्ददर्शनात् लक्षणात्वमभ्युपगम्यते, न तु सर्वत्र। अन्यथा सर्वेषामेव शब्दानां येन केन जातिलेशेन सर्वानार्थान् प्रति लक्षणाशब्दत्वस्य वक्तुं शक्यत्वात् न कश्चिच्छब्दः कश्चिदर्थं प्रत्यवगमकः स्यात्। मुकुलभट्टेन एवंविधानां लक्षणानां गुप्तप्रति-पादनादिप्रयोजनसंभवे अदुष्टत्वमुपदिष्टम्। तथाविधविषये वृद्धव्यवहारेण तासामभ्यनुज्ञातत्वात् इति।

अतो वृद्धव्यवहारेणाभ्यनुज्ञातानां लक्षणानाम् अथवा तत्सजाती-यशब्दद्वारेण गमकतयावधारितानामेव तक्षकत्वमिति निश्चितम्।

**लक्षणाहेतवः-**

वृद्धव्यवहारे लाक्षणिकशब्दप्रयोगे को हेतुरिति जिज्ञासायां मुकुलभट्टेनाभ्यधायि यत्-

**मुख्यार्थासंभवात् सेयं मुख्यार्थासत्तिहेतुका।**
**रूढेः प्रयोजनाद्वापि व्यवहारे विलोक्यते।।**[२]

---

१. अ.वृ.मा. ६-७

२. अ.वृ.मा. ९-१०

स्वमेव टीकतेऽत्र मुकुलभट्टः कारिकामिमामधोलिखितवाक्यैः– 'या चेयं षट् प्रकारा लक्षणा पूर्वमुक्ता सा–

१. मुख्यस्यार्थस्य प्रमाणान्तरबाधितत्वेनासंभवात्।

२. लक्ष्यमाणस्य चार्थस्य मुख्यार्थं प्रति आसन्नत्वात्।

३. सान्तरार्थग्रहणस्य च सप्रयोजनत्वात्।

इत्येवंविधकारणत्रितयात्मकसामग्रीसमाश्रयेण वृद्धव्यवहारे परिदृश्यते। मुकुलभट्टेन मुख्यार्थासन्नत्वप्रतिपादने **आचार्यभर्तुमित्रस्य** मतमङ्गीकुर्वता तस्य कारिकाऽपि समुद्धृता–

**अभिधेयेन सम्बन्धात् सादृश्यात् समवायतः।**
**वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता।।**[१] **इति।**

**सम्बन्धलक्षणा–**

यथा 'गङ्गायां घोष इति। अत्र हि गङ्गाशब्दाभिधेयस्य स्रोतोविशेषस्य घोषाधिकरणानुपपत्त्या मुख्यशब्दार्थबाधे सति योऽसौ समीपसमीपिभावात्मकः सम्बन्धः तदाश्रयेण तटं लक्षयति। अत्र च लक्षणायाः प्रयोजनं तटस्य गङ्गात्वैकार्थसमवेतासंविज्ञानपदपुण्यत्वमनोहरत्वादिप्रतिपादनम्। न हि तत् पुण्यत्वमनोहरत्वादि स्वशब्दैः स्प्रष्टुं शक्यते, अव्याप्त्यतिव्याप्तिप्रसङ्गात्।' अतः समुपस्थितायां मुख्यार्थबाधायां गङ्गाशब्दमुख्यार्थस्य सामीप्यसम्बन्धेन तटरूपार्थलक्षणादत्र सम्बन्धलक्षणा।

**सादृश्यलक्षणा–**

**भ्रमर भ्रमता दिगन्तराणि क्वचिदासादितमीक्षितं श्रुतं वा।**
**वद सत्यमपास्य पक्षपातं यदि जातीकुसुमानुकारि पुष्पम्।।**[२]

---

१. अ.वृ.मा. ९–१०

२. तत्रैव ९. वृत्तौ

अत्र हि भ्रमरपुष्पशब्दौ सम्बोधनान्यथानुपपत्त्या बाधितमुख्यार्था-वभिधेयसादृश्यात् तद्गतगुणसदृशगुणप्रयुक्तमर्थान्तरं लक्षणयावगमयत:। अतोऽत्र सादृश्यलक्षणा अवधेया।

**समवायलक्षणा–**

यथा– 'छत्रिणो यान्ति इति। अत्र बहुवचनप्रयोगान्मुख्यशब्दार्थबाध:। न ह्येकस्मिंश्छत्रिणि बहुवचनस्य प्रयोग उपपद्यते, अतोऽत्र गमनलक्षणायां क्रियायां छत्रिणा सह योऽसौ छत्रशून्यानां समवाय: (साहचर्यम्) तद्वशात् छत्रिशब्देन छत्रशून्या अपि लक्षणयावगम्यन्ते। अस्माद्धेतोऽत्र समवायलक्षणा।

**विपरीतलक्षणा–**

यथा 'भद्रमुख:' इति। हि भद्रमुखशब्दस्याभद्रमुखे प्रयोगात् स्वार्थबाध:, अतोऽसौ वाच्यभूतभद्रमुखत्वविपरीतत्वादभद्रमुखत्वं विपरीतनिबन्धनतया लक्षणया प्रत्याययति।

**क्रियायोगाल्लक्षणा–**

**'पृथुरसि गुणै: कीर्त्त्या रामो नलो भरतो भवान्**
**महति समरे शत्रुघ्नस्त्वं, क्षितौ जनक: स्थिते:।**
**इति सुचरितै: ख्यातिं बिभ्रच्चिरन्तनभूभृतां**
**कथमसि न मांधाता देव त्रिलोकविजय्यपि।।'**[1]

अत्र हि अशत्रुघ्ने शत्रुघ्नशब्दप्रयोगान्मुख्यशब्दार्थबाध:। शुत्रघ्नशब्दश्चा-शत्रुघ्ने शत्रुहननक्रियाकर्तृत्वयोगाल्लक्षणयोक्त: इति।

**लक्षणायां वाच्यार्थस्य स्थिति:**

लक्षणायां क्वचिद् वाच्यस्याततिरस्कार: क्वचिद् विवक्षितत्वं क्वचि-च्चाविवक्षितत्वमित्येवंविध: त्रय: प्रकारा: सहृदयैरुपदर्शिता:। अत: मुकुलभट्टेन तेषां विषयविभाग: समुपदिष्ट:। तेनोक्तं यत्–

१. अ.वृ.मा. ९-१०

**सादृश्ये वैपरीत्ये च वाच्यस्यातितिरस्क्रिया।।**
**विवक्षा चाविवक्षा च सम्बन्धसमवाययोः।**
**उपादाने विवक्षात्र लक्षणे त्वविवक्षणम्।।**
**तिरस्क्रिया क्रियायोगे क्वचित् तद्विपरीतता।**[१]

**क्वचिद्वाच्यस्यात्यन्तं तिरस्कारः**

लक्षणायां यत् पञ्चविधं मुख्यार्थासन्नत्वं प्राक् प्रतिपादितमाचार्येण तेषु सादृश्ये, वैपरीत्ये च वाच्यस्यात्यन्तं तिरस्कारः समुपदर्शितः। सादृश्यनिबन्धनायां लक्षणायमुपमानवाचिनः पदस्योपमेयपरत्वमुपमानात्मकं वाच्यमत्यन्तं तिरस्क्रियते। यथा– 'स्निग्धश्यामलकान्तिलिप्त' इति 'पयोदसुहृदामि'–ति च। अत्र हि लिप्तसुहृच्छब्दयोः स्वार्थोपमितवस्तुपरत्वात् स्वार्थस्यात्यन्तं कार्येऽनन्वित्वम्।

वैपरीत्यसमाश्रयायामपि तस्यामर्थान्तरस्य वाच्यविपरीतस्योपादेयत्वाद् वाच्यस्यात्यन्तं तिरस्कारः यथा 'भद्रमुखे'ति। अत्र हि भद्रमुखत्वमभद्रमुख–त्वादत्यन्तं तिरस्कृतम्।

**क्वचिद्वाच्यस्य नात्यन्तं तिरस्कारः**

सम्बन्धनिबन्धनायां समवायनिबन्धनायाञ्च लक्षणायां वाच्यस्य विवक्षितत्वाविवक्षितत्त्वेन तस्य नात्यन्तं तिरस्कारः।

(१) सम्बन्धनिबन्धनायामुपादानात्मिकायां लक्षणायामुपादाने वाच्यविवक्षायां वाच्यस्य विवक्षितत्वम् अङ्गीकृतं मुकुलभट्टेन। 'सहृदयैः काव्यवर्त्मनि विवक्षितान्यपरया निरूपिता, वाच्यस्यार्थान्तरसंक्रमितत्वात् इत्यपि सूचितं तेन।

यत्रार्थान्तरसंक्रमितवाच्यता तत्र सम्बन्धनिबन्धनायां लक्षणायामुपादाने वाच्यविवक्षायामुदाहरणं 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति। अत्र हि दिनाधिकरण–भोजनाभावविशिष्टतया पीनत्वलक्षणं कार्यं विवक्षितमेव सत्

१. अ.वृ.मा. १०–१२

स्वसिद्ध्यर्थत्वेन सम्बन्धनिबन्धनायां लक्षणायां रात्रिभोजनात्मकं कारणमाक्षिपति।

(२) समवायनिबन्धनायां तस्यामुपादने वाच्यस्य विक्षितत्वं यथा– छत्रिणो यान्ती'ती। अत्र हि यदा छत्री बहुत्वोपेतत्वात् स्वगतबहुत्वान्वय-संसिद्धार्थत्वेन छत्रशून्यानपि आक्षिपति तदा समवायनिबन्धने छत्रशून्यानामुपादाने क्रियमाणे वाच्यश्छत्री विवक्षितः। तदेवम् उभयोर्वाच्यस्य विवक्षितत्वं प्रतिपादितम्।

तयोः पुनर्वाच्यस्याविवक्षितत्वम् न त्वत्यन्तं तिरस्कारः।

(१) सम्बन्धनिबन्धनायां लक्षणायामविवक्षितवाच्यत्व उदाहरणम् 'रामोऽस्मी'ति। अत्र हि रामशब्दवाच्यं दाशरथिरूपं प्रतीयमानधर्मान्तरपरिणतत्वात् स्वपरत्वेनानुपात्तम्, तस्मादविवक्षितम् न त्वत्यन्तं तिरस्कृतम्, व्यङ्ग्यधर्मद्वारेण वाक्यार्थे कथञ्चिदन्वित्वात्।

(२) समवायसम्बन्धनिबन्धनायां तु लक्षणायामविवक्षितवाच्यता, यथा 'छत्रिणो यान्ती' ति। तथा हि छत्रित्वं बहुत्वान्वयान्यथानुपपत्त्या समुदायपरतयोपादीयते तदात्र समुदायस्य विवक्षितत्वाद् वाच्यस्य विवक्षा। एवमपि समुदायान्तर्भूतत्वात् समुदायद्वारेण छत्रिणोऽपि क्रियान्वयः सुलभ एव। अत एव चात्र वाच्यस्य नात्यन्तं तिरस्कारः समुदायरूपान्तर्भूतत्वेन क्रियान्वितत्वात्।

तदेवं सम्बन्धसमवायनिबन्धनयोर्लक्षणयोर्वाच्यस्य विवक्षितत्वमवि-वक्षितत्वञ्च न त्वत्यन्ततिरस्कार इति।

## वाच्यार्थस्य क्वचित् तिरस्कारः क्वचिद्विवक्षा च

क्रियायोगनिबन्धनायां लक्षणायामन्तःसंक्रान्तनानार्थवशतः क्वचिद्वाच्यः तिरस्क्रियते क्वचितु विवक्ष्यत इति। यथा 'पुरुषः पुरुष' इति। अत्र एकेन पुरुषशब्देन विशिष्टजातीयस्यार्थस्योपात्तत्वादपरः पुरुषशब्दः स्ववाच्यव्यतिरे-केणैव क्रियायोगनिबन्धनायां लक्षणया पुनरतिशयतृत्वमुपादत्ते। अन्यत्र यथा 'महति समरे शत्रुघ्नस्त्वमि'–ति प्रयोगे शत्रुघ्नशब्दः शत्रुहननक्रियायाः कर्त्तृत्वं

क्रियायोगनिबन्धनायां लक्षणयावगमयन्नपि स्वार्थं दाशरथिमुपमानतया प्रतिपादयति। तेन तस्य विवक्षितस्य स्वार्थतापि। यद्यपि चोपमेयपरत्वेनो-पमानस्यापादानोदेवंविधे विषयेऽत्यन्ततिरस्कृतवाच्यता सहृदयैरङ्गीक्रियते तथापि क्रियायोगनिबन्धनलक्षणावसरे तावद् वाच्यस्योपमानत्वेनाङ्गीकृतत्वाददतिर-स्कृतवाच्यतापि भवति।

सारांशस्त्वयमेव यद् वाच्यार्थः सम्बन्धसमवायनिबन्धनयोर्लक्षणयोः विवक्षितत्वाविवक्षितत्वेन नात्यन्तं तिरस्कृतः, सादृश्यवैपरीत्यनिबन्धन-लक्षणयोरत्यन्तं तिस्कृतः, सादृश्यवैपरीत्यनिबन्धनलक्षणयोरत्यन्तं तिरस्कृतः, एवं च क्रियायोगनिबन्धनायां लक्षणायां क्वचित् तिरस्कृतः क्वचिच्च विवक्षित इति।

## मुकुलभट्टस्य वाक्तत्त्वविवर्तवादः

आयार्चमुकुलभट्टः प्रथमतोऽभिधाया दशभेदान् सप्रपञ्चं प्रतिपाद्य शब्दस्य पारमार्थिकं स्वरूपं विचिन्तयन् निखिलमर्थजातं तत्सहायिकां शब्दशक्तिमपि तद्विवर्तनेनाङ्गी करोति। वस्तुतः शब्दस्तु एक एव, स च नित्योऽक्षरः शब्दब्रह्मेति ख्यातः शब्दाद्वैतवादिनां निकाये। यदा शब्दः समुच्चार्यते कण्ठताल्वादिस्थानेभ्यः तदा तत्रानेकता आयाति, स्फुरति च तत्र मुख्यार्थप्रतिपादिनी अभिधेति तच्छक्तिर्यया समुपजायते विवर्तात्मकोऽर्थस्य महान् प्रसरः। व्याकरणदर्शनस्येद रहस्यं प्रकटीकृतं वाक्यपदीयकारेण तत्र प्रथमायामेव कारिकायाम्–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**[१]

विवर्त्तशब्दोऽयं दर्शनसम्प्रदायेषु नितरां प्रसिद्धः तत्रापि सत्कार्य-वादस्यान्यतमभेदवादिप्रस्थानेषु यथा रज्जुसर्पदृष्टान्ते रज्जुस्थले सर्पस्य प्रतीतिः प्रातिभासिकी न तु पारमार्थिकी तथैवार्थस्य तद्विषयविभागस्य च प्रतीतिर-पारमार्थिकी शब्दब्रह्मणश्च पारमार्थिकी स्थितिः शाश्वती। अयमेवार्थस्य शब्दाद्

१. वा.प. १.१

भिन्नसत्ताको बोधः विवर्त इति ख्यातः। विवर्तमानः पदार्थः त्रिकालाबाधितो न भवति मिथ्यात्वात् यावत्तस्य प्रतीतिस्तावत् तस्य कश्चिद्वाचकः कचिद्वाच्यः कश्चिच्चोभयोर्नियामकः सम्बन्धोऽवश्यमेव भासते। अतोऽत्रैव प्रतिभासतेऽभिधा अभिधायाश्च प्रपञ्चः सकलविकल्पो-ल्लेखोपप्लवत्वे तु क्रमभेदसंहरणेन तस्मिन् वाक्तत्त्वे तेषां दशानामभिधावृत्तानां कुतो गतिः, नैव प्रसर इति प्रतिपादयति मुकुलभट्टो निम्नलिखितकारिकया तट्टीकया च।

**'विवर्त्तमानं वाक्तत्त्वं दशधैव विलोक्यते।**
**संहृतक्रमभेदे तु तस्मिंस्तेषां कुतो गतिः।।**[१]

सकलशब्दाविभागात्मनः शब्दतत्त्वस्य प्रमातृप्रमाणप्रमेयप्रमितिरूपेण प्रकारचतुष्टयेन प्रत्येकं वाच्यवाचकतत्सम्बन्धप्रपञ्चभाजो रज्जुसर्पवद् विवर्तमानस्य निरूपितेवंविध-दशविधाभिधावृत्त-सम्बन्धित्वम्।' इति

**मुकुलभट्टस्य सिद्धान्तसारः**

१. एकैव शब्दवृत्तिः सा च अभिधा।

२. अभिधायाः प्रथमोऽर्थः मुख्यार्थः तद्भिन्नाः सर्वेऽपि अमुख्यार्थाः। अतो लक्ष्यार्थोऽस्मिनैव वर्गे निरूपितः।

३. मुख्यार्थसहाय्येनैवाभिधाव्यापारोऽमुख्यार्थमवगमयति।

४. अभिधायाः दशभेदाः, चत्वारो मुख्यार्थभेदेन षट् चामुख्यार्थभेदेन।

५. विवर्तमानमेतदभिधावृत्तम् इति।

## मीमांसा

अभिधावृत्तमात्रिकाया अध्ययनेनेदं स्पष्टतया प्रतिभाति यद् मुकुलभट्ट आनन्दवर्धनेन ध्वन्यालोके कृतं शब्दशक्तिविविचनमेव प्रत्याख्यातुं व्यञ्जनाशब्दवृत्तिञ्चाभिधायामन्तर्भावयितु स्वीयं ग्रन्थं प्रणिनाय। तेन स्वकीये ग्रन्थे आनन्दवर्धनः सहृदयशब्देन सादरं व्यपदिष्टः-

१. अ.वृ.मा. १२-१३

'एतच्च सर्वं बहुवक्तव्यत्वादिह न निरूप्यते। लक्षणामार्गावगाहित्वं तु ध्वनेः सहृदयैर्नूतनतयोपवर्णितस्य विद्यत इति दिशमुन्मीलयितुमिदमत्रोक्तम्। एतच्च विद्वद्भिः कुशीग्रया बुद्ध्या निरूपणीयम्, न तु झगित्येवासूयितव्यमित्यं-लमतिप्रसङ्गेन।'[१]

अनेन समुद्धरणेन ज्ञायते यत् मुकुलभट्टः आनन्दवर्धनस्य व्यञ्जना-सिद्धान्तमेवापलपयितुं यतते। तेन आनन्दवर्धनप्रतिपादितविवक्षितान्य-परवाच्यध्वनिः, यो हि-मुख्यार्थबाधाभावाल्लक्षणाऽविषयो भवति, लक्षणाया-मेवान्तर्भावितः। वृत्तित्रयं सर्वथाऽस्वीकृत्य-मुख्यामुख्यार्थप्रतिपादिनी शब्द-स्याभिधाशक्तिरेवाङ्गीकृता।

मुकुलभट्टं विधिना विमृशति ध्वनिवादी मम्मटः स्वकीये काव्यप्रकाशे तथा शब्दव्यापारविचारे। मुकुलेन समुदाहृतमुपादानलक्षणायाः 'गौरनुबन्ध्यः' 'पीनो देवदत्तः दिवा न भुङ्क्ते' चेत्युदाहरणद्वयम् नाङ्गीकरोति मम्मटः लक्षणाया अविषयत्वात्। तेनोक्तं यत्-

'गौरनुबन्ध्य' इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते 'विशेष्यं नाभिधा गच्छेद् क्षीणशक्तिर्विशेषणे' इति न्यायात्। इत्युपादानलक्षणा तु नोदाहर्त्तव्या। न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावितत्वात्तु जात्या व्यक्तिराक्षिप्यते, यथा क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते। श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात्।'[२]

शुद्धालक्षणायाः विषयविभागमुपदर्शयता मुकुलभट्टेन 'तटस्थे लक्षणा शुद्धा' इति व्याहृत्य लक्ष्यलक्षकयोः भेदरूपं ताटस्थं स्वीकृतम्। मम्मटेन तत्खण्डितम्।

---

१. अ.वृ.मा. १२-१३
२. काव्य.प्र. २.१० वृत्तौ

'अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्, तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु 'गङ्गातटे घोष' इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः।'[१]

मुकुलभट्टस्य लक्षणा वक्त्रादिसामग्र्यपेक्षयैवार्थमवगमयति। अतः प्रकरणादिसहकारिसामग्रीमपेक्षमाणस्य व्यञ्जनाव्यापारस्य लक्षणातुल्यत्वमेव मन्वानेन मुकुलभट्टेन त्रिविधो वस्त्वलङ्काररसरूपो ध्वनिर्वक्तृवाक्यवाच्यनिबन्धनायामेव लक्षणायामन्तर्भावितः। तद्यथा–

**दृष्टिं हे प्रतिवेशिनि, क्षणमिहाप्यस्मद्गृहे दास्यसि,**
**प्रायो नैष शिशोः पिताऽस्य विरसाः कौपीरपः पास्यति।**
**एकाकिन्यपि यामि तद् वरमितः स्रोतस्तमालाकुलं**
**नीरन्ध्रा वपुरालिखन्तु जरठच्छेदा नलग्रन्थयः।।**

अत्र चौर्यरतिरूपोऽर्थः साक्षाच्छब्देन नाभिधीयते अपितु अर्थात् व्यज्यते। अतो ध्वनिवादिनां दिशात्र प्रच्छन्नसुरतरूपो वस्तुध्वनिः असौ च ध्वनिः वक्त्र्याः पुंश्चल्या वैशिष्ट्येनास्वाद्यते।

किन्तु मुकुलभट्टस्त्वत्र वक्तृनिबन्धनायाः लक्षणायाः विषयत्वं प्रतिपादयति। यतो ह्यत्र समुपनिबद्धार्थस्य जलानयनालीकार्थस्य बाधत्वेन प्रतीतेरनन्तरं वैपरीत्य-सम्बन्धेन परपुरुषसम्भोगरूपोर्थोऽवगम्यते। अतोऽत्रोपादानात्मिका लक्षणा मुकुलभट्टाभिमता। एवं ध्वनिविरोधिना मुकुलभट्टेन ध्वनिवादिनां वस्तुध्वनिः वक्तृनिबन्धनायां लक्षणायामन्तर्भावितः।

ध्वनिवादिनामलङ्कारध्वनिर्मुकुलभट्टस्य वाक्यनिबन्धनालक्षणायामेवान्तर्भावितः तद्यथा–

**प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या-**
**न्निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि।**

१. काव्य.प्र.,२.१० वृत्तौ

**सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-**
**स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ।।**

अत्र कोऽपि नृपतिरुपश्लोक्यते चाटुवचनैः। समुद्रतटं तस्यागतस्य सैन्यभरेण समुद्रस्य क्षोभ्यमाणत्वात् तस्य राज्ञः वासुदेवाभिन्नत्वमुत्प्रेक्ष्यते। समुद्र-मन्थन-शयन-बन्धनादिप्रभृतयो ये वासुदेवव्यापारविशेषाः त एवास्य नृपतेरपि विभाव्यन्ते। अतस्तयोरभिन्नत्वात् रूपकमुत्प्रेक्षा वालङ्कारोभिव्यज्यते। अलङ्कारस्य व्यङ्ग्यार्थत्वेन प्रतीतिवशादलङ्कारध्वनिरत्रेति ध्वनिवादिनां समयः।

परं मुकुलभट्टस्त्वत्र गौणोपचारात्मिकायाः साध्यवसानायाः लक्षणायाः विषयत्वमङ्गीकरोति। यतो वाक्यपर्यालोचनयात्रार्थप्रतीतिः अतो वाक्यनिबन्धना लक्षणा प्रतिपादिता तेन।

ध्वनिवादिनां रसध्वनिरपि मुकुलभट्टेन लक्षणायामेवान्तर्भावितः। तद्यथा-

**दुर्वारा मदनेषवो दिशि दिशि व्याजृम्भते माधवो**
**हृद्युन्मादकराः शशाङ्करुचयश्चेतोहराः कोकिलाः।**
**उत्तुङ्गस्तनभारदुर्धरमिदं प्रत्यग्रमन्यद् वयः**
**सोढव्याः सखि साम्प्रतं कथममी पञ्चाग्नयो दुःसहाः ।।**

अत्र समुपवर्णितैरालम्बनोद्दीपनविभावैः सहृदयदृदये वासनात्मकतया स्थिता रतिरुद्दीप्यते। येन शृङ्गाररसस्याभिव्यञ्जनं जायते। परं मुकुलभट्टस्त्वत्र वाच्यनिबन्धनलक्षणायाः विषयत्वमत्राङ्गीकरोति। तन्मतेऽत्र वर्णितेषु पञ्चपदार्थेषु पञ्चाग्नीनामारोपः। किन्त्वयमारोपस्तु स्वयमनुपपन्नः, अतः तत्परिहाराय विप्रलम्भशृङ्गाररसस्याक्षेपः तत एव उपादानात्मिका लक्षणात्र वाच्यस्य निबन्धनत्वेन वाच्यनिबन्धना। एवं मुकुलभट्टेन रसध्वनिरपि वाच्यनिबन्धनायां लक्षणायामन्तर्भावितः।

उपर्युक्तविवेचनेनेदं स्पष्टं यत् मुकुलभट्टेन हठात् ध्वनिर्लक्षणाया-मन्तर्भावितः वस्तुतः लक्षणा भिन्ना, भिन्नश्च ध्वनिविषयः। अन्वयानुपपत्तिस्ता-

त्पर्यानुपपत्तिर्वा लक्षणायाः बीजमिति विदुषां मतम्। अतः पूर्वोदाहृतेषु पद्येषु अनुपपत्तिनिवारणार्थकं मुख्यार्थबाधं विना लक्षणाया अङ्गीकार एव न सम्भवति। तत्र असत्यायां च लक्षणायां ध्वनेरन्तर्भावः कथं वक्तुं शक्यते? पुनरन्यदपि, वक्तृवाक्यवाच्यानां यन्निबन्धनत्वं लक्षणायामुक्तं मुकुलभट्टेन तत्तु ध्वन्यनुकूलमेव। ध्वनौ वक्तृबोद्धव्यादीनां सहकारित्वेनापेक्षा जागर्ति सहृदयानां हृदय इति सिद्धान्तो ध्वनिवादिनाम्। अतः वाक्छलेन ध्वनेरेव तत्र प्रतिपादनं भवति न पुनः तस्यान्तर्भाव। इत्यलं विस्तरेण।

**अभिधावृत्तमात्रिकायाः कारिकाः**

**शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।**
**अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते ।।१।।**

**तत्र मुख्यश्चतुर्भेदो ज्ञेयो जात्यादिभेदतः।**
**शुद्धोपचारमिश्रत्वाल्लक्षणा द्विविधा मता ।।२।।**

**उपादानाल्लक्षणाच्च शुद्धा सा द्विविधोदिता।**
**स्वसिद्ध्यर्थतयाक्षेपो यत्र वस्त्वन्तरस्य तत् ।।३।।**

**उपादानं, लक्षणं तु तद्विपर्यासतो मतम् ।**
**आरोपाध्यवसानाभ्यां शुद्धगौणोपचारयोः ।।४।।**

**प्रत्येकं भिद्यमानत्वादुपचारश्चतुर्विधः ।**
**तटस्थे लक्षणा शुद्धा स्यादारोपस्त्वदूरगे ।।५।।**

**निगीर्णेऽध्यवसानं तु रूढ्यासन्नतरत्वतः ।**
**वक्तुर्वाक्यस्य वाच्यस्य रूपभेदावधारणात् ।६।।**

**लक्षणा षट्प्रकारैषा विवेक्तव्या मनीषिभिः ।**
**अन्वयेऽभिहितानां सा वाच्यत्वादूर्ध्वमिष्यते ।७।।**

**अन्वितानां तु वाच्यत्वे वाच्यत्वस्य पुरः स्थिता।**
**द्वये द्वयमखण्डे तु वाक्यार्थपरमार्थतः ।।८।।**

नात्यसौ कल्पितेऽर्थे तु पूर्ववत् प्रभिज्यते।
मुख्यार्थासंभवात् सेयं मुख्यार्थासत्तिहेतुका ।।९।।

रूढेः प्रयोजनाद्वापि व्यवहारे विलाक्यते ।
सादृश्ये वैपरीत्ये च वाच्यस्यातितिरस्क्रिया ।।१०।।

विवक्षा चाविवक्षा च सम्बन्धसमवाययोः ।
उपादाने विवक्षात्र लक्षणे त्वविवक्षणम् ।।११।।

तिरस्क्रिया क्रियायोगे क्वचित् तद्विपरीतता ।
विवर्तमानं वाक्तत्त्वं दशधैवं विलोक्यते ।।१२।।

संहृतक्रमभेदे तु तस्मिंस्तेषां कुतो गतिः ।
इत्येतदभिधावृत्तं दशधाऽत्र विवेचितम् ।।१३।।

पदवाक्यप्रमाणेषु तदेतत् प्रतिबिम्बितम् ।
यो योजयति साहित्ये तस्य वाणी प्रसीदति ।।१४।।

भट्टकल्लटपुत्रेण मुकुलेन निरूपिता ।
सूरिप्रबोधनायेयमभिधावृत्तमात्रिका ।।१५।।

*इति शारदाचरणरजःकणपवित्रितस्थलवास्तव्यश्रीकल्लटात्मज-*
*भट्टमुकुलविरचिता अभिधावृत्तमात्रिका समाप्ता।*

**प्रतीहारेन्दुराजः ( ९५०-९९०ई )**

अलङ्कारप्रस्थाने प्रतीहारेन्दुराजस्य महत्त्वपूर्णं स्थानमस्ति। अयम् अभिधावृत्तमात्रिकाकर्त्तुः कल्लटपुत्रमुकुलभट्टस्य शिष्य आसीत् इति तस्यैव समुल्लेखादस्ति सुविदितं विद्यावताम्।

**विद्वदग्र्यान्मुकुलादधिगम्य विविच्यते।**
**प्रतिहारेन्दुराजेन काव्यालङ्कारसंग्रहः ।।**[1]

**तथा–**

**मीमांसासारमेघात्पदजलधिविधोस्तर्कमाणिक्यकोशात्**
**साहित्यश्रीमुरारेर्बुधकुसुममधोः शौरिपादाब्जभृङ्गात्।**
**श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात् कीर्तिवल्ल्यालवालात्**
**काव्यालङ्कारसारे लघुविवृतिमधात् कौङ्कणः श्रीन्दुराजः।।**[2]

अतो मुकुलभट्टस्य शिष्यत्वं निर्वहतः प्रतीहारेन्दुराजस्य जीवनसमयः मुकुलभट्टात् (८८३-९२५ई०) किञ्चित्परम् अर्थात् ईसवीयसंवत्सरस्य ९२५ तः ९९० तमाब्दं यावत् समुद्घोष्यते समीक्षकैः। अभिनवगुप्तपादाचार्यस्य गुरुरासीदिन्दुराज इति ध्वन्यालोकलोचनटीकायाः सन्दर्भाज्ज्ञायते। तद्यथा–

**भट्टेन्दुराजचरणाब्जकृताधिवास–**
**हृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम्।**
**यत्किञ्चिदप्यनुरणन्स्फुटयामि काव्या–**
**लोकं सुलोचननियोजनया जनस्य।।**[3]

तथा– **यथाऽस्मदुपाध्यायभट्टेन्दुराजस्य ।**

अस्मिन् विषयेऽपि समीक्षकाणां मतैक्यं नास्ति। केचनाभिनवगुप्त–पादाचार्यस्याचार्यत्वेनान्यमिन्दुराजं प्रमाणयन्ति। ते संगिरन्ते यद् अलङ्कारप्रस्थाने

---

१. ल.वृ. ३
२. ल. वृ. अन्तिमं पद्यम्
३. ध्व. लो.

दीक्षितोऽयमिन्दुराजः कथमपि ध्वनिप्रस्थाने दीक्षितस्याभिनवगुप्तस्य गुरुर्भवितुं नार्हति, प्रस्थानभेदात्। किन्त्वेतन्नास्ति बलवत्तरं प्रमाणम्। वयं तु प्रतीमो यदेक एव प्रतीहारपूर्वकः काश्मीरक इन्दुराजः, स एव मुकुलभट्टस्य शिष्यः, आचार्याभिनवगुप्तपादस्याचार्योऽलङ्कारविद्यायाः। देशकालनामादिषु समत्वेऽपि अमुमपास्य भिन्नस्य कस्यचिदिन्दुराजस्याभिनवगुप्तोपाध्यायत्वेन परिकल्पनं कथमप्यौचित्यं नावहति। अतो लघुविवृत्तिकर्तृत्वेन प्रथित इन्दुराज एवाभिनवगुप्तस्य गुरुरिति प्रत्ययो मदीयः।

कात्यायनगोत्रोत्पन्नस्येन्दुराजस्य पितुर्नाम भूतिराज आसीत्, शौचुकश्च तस्य पितामहनामेति–अभिनवगुप्तस्य गीताव्याख्यानान्तवक्तव्येनावसीयते।

महापण्डितस्य इन्दुराजस्य प्रसिद्धिः उद्भटकाव्यालङ्कारसारसंग्रहस्य लघुविवृत्तिकर्तृत्वेनास्ति प्रसिद्धिः। वस्तुतः टीकेयं वैदुष्यमिन्दुराजस्याटीकते नितान्तम्। कारिकाणां व्याख्यानेऽत्यन्तं निपुणोऽयमाचार्यः अतिप्राञ्जलभाषया तर्कपूर्णपद्धत्या चालङ्कारतत्त्वं निर्दिशति, निर्दिशति च विशदं ग्रन्थकर्त्तुराशयम्। वस्तुतः व्याख्यानेनानेन मूलग्रन्थोऽतिशय्यं भजते, नास्त्यत्र संदेहलेशोऽपि। अभिनवगुप्तेन 'विद्वत्कविसहृदयचक्रवर्त्ती'– त्युपाधिना विभूषितस्यापि अस्य अद्यावधि नोपलब्धः कश्चिदपि अन्यो ग्रन्थः।

## प्रतीहारेन्दुराजस्य अलङ्कारवादस्य मीमासां

काव्येऽलङ्कारस्यैव प्राधान्यमङ्गीकुर्वतामाचार्याणामिन्दुराजः अन्यतमः। तथ्यमिदं न केवलं प्रसिद्धालङ्कारिकस्योद्भटस्य ग्रन्थस्य व्याख्यानेन प्रमाणितम्, अपि तु अलङ्कारस्य प्राधान्यं तेनोद्घोषितं मुक्तकण्ठेन। आश्चर्यजनकन्त्विदमस्ति यत् सप्रपञ्चं ध्वनिं परिचिन्वताऽपि अलङ्कारपक्षे बद्धपक्षपातेन तेन ध्वनिर्नालङ्कारव्यतिरिक्त इति समुद्घोषितम्। 'रसाः खलु काव्यस्यालङ्काराः' इत्येवं व्याहरता तेन सर्वमपि काव्यचारुत्व-मलङ्कारान्तर्गतमिति परिप्रकाशितम्। तन्मते त्रिविधोऽपि ध्वनिर्नालङ्कारबाह्यः। वस्तुतः तस्य हृदयेऽस्ति ध्वनेः प्रभावः किन्त्वसौ भट्टोद्भटपदानुगमनवशात् काव्येऽलङ्काराणां प्राधान्यं ध्वनेश्च तत्रान्तर्भावं सिद्धान्तयति। लघुवृत्तौ तेनोक्तं

यत्– 'ननु यत्र काव्ये सहृदयह्लादिनः प्रधानभूतस्य स्वशब्दव्यापारास्पृष्टत्वेन प्रतीयमानैकरूपस्यार्थस्य सद्भावस्तत्र तथाविधार्थाभिव्यक्तिहेतुः कैश्चित् सहृदयैर्ध्वनिर्नाम व्यञ्जकत्वभेदात्मा काव्यधर्मोऽभिहितः स कस्मादिह नोपदिष्टः। उच्यते। एष्वलङ्कारेष्वन्तर्भावात्' इति। ततस्तेन ध्वनिवादिभिः वस्तुमात्रालङ्काररसादिभेदेनाङ्गीकृतः त्रिविधोऽपि ध्वनिः भट्टोद्भटमतेन पर्यायोक्ताद्यलङ्कारान्तर्वर्तीति प्रदर्शितम्। भट्टोद्भटमतेन पर्यायोक्ताऽलङ्कारो विमृश्यतेऽत्र प्रथमम्। तेन प्रोक्तं यत्–

**पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते।**
**वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना॥**[१]

अर्थात् वाच्यवाचकव्यापारमन्तरेणापि प्रकारान्तरेण यदर्थावगमः तत् पर्यायेण स्वकण्ठानभिहितमपि सान्तरेण शब्दव्यापारेणावगम्यमानत्वात् पर्यायोक्तं वस्तु।

**उदाहरणम्–**

**येन लम्बालकः साश्रकरघातारुणस्तनः।**
**अकारि भग्नवलयो गजासुरवधूजनः॥**
**सोऽपि येन कृतः प्लुष्टदेहेनाप्येवमाकुलः।**
**नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे॥**[२]

गजासुरवधरूपोऽर्थः वाच्यवाचकव्यापारास्पृष्टाऽपि पर्यायान्तरेणावगम्यते। अत एवं विधया विच्छित्याऽवगम्यमानेन अर्थेन लम्बालकत्वादयोऽर्था अलङ्क्रियन्ते तस्मादत्रोद्भटाभिमता पर्यायोक्तालङ्कारता।

वस्तुतः वाच्यवाचकव्यापारस्योभयत्र पर्यायोक्तालङ्कारे ध्वनौ चाप्रधान्यरूपं साम्यं दृष्ट्वा प्रतीहारेन्दुराजः सुनिपुणं ध्वनिं पर्यायोक्ताद्यलङ्कारेष्वन्तर्भावयितुं चेष्टते। तन्मते यथा प्रतीयमानार्थः साक्षाच्छब्देन नाभिधीयते

१. का.ल. सा. सं.– ४.६
२. का.ल. सा. सं. ल.वृ. – ४.६–७

अपित्वन्यवैशिष्ट्यादवगम्यते तथैव पर्यायोक्तालङ्कारेऽपि वाच्यवाचकभिन्नेन प्रकारेण शब्दानुक्तोप्यर्थः द्योतितो भवित। अतः प्राचीनाचार्यप्रोक्तपर्यायोक्तालङ्काराद् बाह्यः न कश्चिद् ध्वनिरिति तस्य प्रतिपत्तिः।

**चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य।**
**आलिङ्गनोद्दामविलासबन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्।।**[१]

अत्र हि पद्ये राहुशिरश्छेदरूपोऽयमर्थः नालङ्काररूपो नापि रसादिरूपोऽपितु वस्तुमात्ररूपः। अत एवात्र पद्ये वस्तुमात्रस्य प्रतीयमानता। तस्य च काव्यधर्मस्य ध्वननाभिधानस्य वाच्यवाचकव्यापारशून्यावगमनस्व-भावत्वात् पर्यायोक्ताङ्कारसंस्पर्शित्वम्। अतो ध्वनिर्नालङ्कारव्यतिरिक्तः। प्रतीयमानस्यार्थस्य प्रधानत्वादवश्यमेवालङ्कार्यता। यथा कश्चित् स्वामी भृत्यस्य विवाहप्रसङ्गे वरयात्रायां सम्मिलितो भूषयति विवाहोत्सवं स्ववैष्ट्येन तथैव प्रतीयमानोऽर्थः वाच्यार्थं भूषयन्नलङ्कारनाम्ना व्यपदिश्यते। एवं पर्यायोक्ताद्यलङ्कारेष्वन्तर्हितस्य ध्वनेरलङ्कारता तदभिमता। तेन प्रतिपादितं यत्-

**स्निग्धश्यामलकान्तलिप्तवियतो वेल्लद्वलाका घना**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव।।**[२]

अत्रापि रामादिशब्दानामसाधारणरूपतया राज्यभ्रंशवनवाससीताहरण-पितृमरणादयो दुःखैकहेतवो स्वार्थसहचारिणो वस्तुमात्ररूपाः व्यङ्ग्यधर्माः तत्परिणतरूपतया स्वार्थस्य प्रतीतिः तद्धेतुभूतत्वात् पर्यायोक्तालङ्कारसंस्पर्शितैव। न खलु पदे पर्यायोक्तेन न भवितव्यम् इतीयं राज्ञामाज्ञा सूत्रकारवचनं वा। लक्षणयोगविभक्तरूपतावस्थाप्यते। अत्र च पर्यायोक्तलक्षणं विद्यते वाच्य-वाचकव्यापारशून्यस्यावगमनात्मनः प्रकारस्य सद्भावात्। तेन कथं पर्यायोक्तता न स्यात्।

१. का.ल. सा. सं. ल.वृ. - ६.७५ वृत्तौ
२. तत्रैव, वृत्तौ

एवमन्यत्रापि वस्तुमात्रे प्रतीयमाने पर्यायोक्तता वाच्या तस्मान्न वस्तुमात्रे प्रतीयमाने तदभिव्यक्तिहेतुः काव्यधर्मो ध्वनिर्नामार्थान्तरम्।'

एवमलङ्कारध्वनेरपि पर्यायोक्तालङ्कारान्तर्गतत्वं तेन प्रोक्तम्–

**लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्**
**स्मेरेऽधुना तव मुखे तरलातयाक्षि ।**
**क्षोभं यदेति न मनागपि तेन मन्ये**
**सुव्यक्तमेव जलराशिरयं पयोधिः ।।**[१]

अत्र यमकाऽलङ्कारस्य ध्वननादलङ्कारध्वनिः ध्वनिवादिनां मते। किन्तु, प्रतीहारेन्दुराजमते स्वरूपानुरूपः पूर्वप्रतिपादितेषु कश्चिदलङ्कारः पर्यायोक्तालङ्कारो वा न तु ध्वनिः। यतो हि वाच्यवाचकभिन्नेन प्रकारेण मुखस्य चन्द्रेण रूपणा प्रतीयते सा तु पर्यायोक्तालङ्कारान्तर्गतैव। अतो न ध्वनिरूपः अपितु पर्यायोक्तालङ्काररूपः। अथवा वाच्यो रूपकालङ्कार एवात्र। न च यस्यालङ्कारस्य प्रतीयमानरूपता तस्येहालङ्कारत्वं केनचिन्निवारितम्। इत्थं रूपकालङ्कारो वाच्योऽत्रभ्युपेयोऽथवा मुखचन्द्रयोः परस्परमुपमानोपमेयभावप्रतीयमानाद् रूपकालङ्कारोयं–वाच्यवाचकवृत्तिशून्येनावान्तरप्रकारेणाभिहित्वात् पर्यायोक्तालङ्कारपक्षपाती। अतोऽत्र रूपकालङ्कारो भवेद् वा पर्यायोक्तालङ्कारो वा परमलङ्कार एव कश्चन न तु ध्वनिरिति तस्य पक्षः।

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ।।**[२]

इत्यादौ लक्षणाद्वारेण गर्भीकृतोपमानोपमेयभावा असम्भवद्वाच्यार्था निदर्शाना वक्तव्या।

**सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम्।**
**चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ।।**[३]

---

१. का.ल. सा. सं. ल.वृ. – ६.७५ वृत्तौ
२. तत्रैव, वृत्तौ
३. तत्रैव, वृत्तौ

इत्यादौ श्लेषः। अत एव एतेषां प्रतीयमानालङ्काराणां पर्यायोक्ताद्यलङ्कारेष्वन्तर्भावात् न पृथग्ध्वनिरूपतेति प्रतीहारेन्दुराजनयः।

प्रतीहारेन्दुराजेन ध्वनिवादिनां मतेन काव्यस्य सर्वस्वभूतो रसध्वनिरपि भट्टोद्भटप्रोक्तेषु रसवदाद्यलङ्कारेष्वन्तर्भावितः। भट्टोद्भटप्रोक्तं रसवदलङ्कारलक्षणम्–

**रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम्।**
**स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम् ।।**[१]

लघुवृत्तौ कारिकामिमां व्याकुर्वता प्रतीहारेन्दुराजेन प्रत्यपादि यत् ''यदुक्तं भट्टोद्भटेन पञ्चरूपा रसा इति। तत्र स्वशब्दाः शृङ्गारादेर्वाचकाः शृङ्गारादयः शब्दाः स्थायिनो रसानामुपादानकारणप्रख्या रत्यादयो नव भावाः। सञ्चारिणस्तु निर्वेदादयो रसानामवस्थाविशेषरूपाः। विभावास्तु तेषां निमित्तकारणभूता योषिदादयः ऋतुमाल्यानुलेपनादयश्च। आङ्गिकादयस्तु चत्वारो रसानां कार्यभूता अभिनयाः। एतेषां च स्वशब्दादीनां पञ्चानां समस्तव्यस्ततया आस्पदत्वाद्येन काव्येन स्फुटरूपतया शृङ्गाररसाविर्भावो दृश्यते तत्काव्यं रसवत्। रसाः खलु तस्यालङ्काराः।''[२] अनेन खलु दर्शनेन तेन रसवदलङ्कारे रसध्वनेरन्तर्भावं प्रदर्शयता अधोलिखितं पद्यं समुदाहृतम्।

**याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया**
**निर्ध्यातं परिवर्तनं पुनरपि प्रारब्धमङ्गीकृतम् ।**
**भूयस्तत्प्रकृतं कृतं च शिथिलक्षिप्तैकदोर्लेखया**
**तन्वङ्ग्या न तु पारितः स्तनभरः क्रष्टुं प्रियस्योरसः।।**[३]

अत्र ध्वनिवादिनां सम्भोगशृङ्गारस्य प्रतीयमानता प्रतीहारेन्दुराजदिशा रसवदलङ्कारस्यैव विषयः। तेनोक्तं यत् यत्रापि भावास्तथा रसभावभासा रसभावतदाभासप्रशमाश्च प्रतीयमानास्तत्रापि यथाक्रमं प्रेयस्वदूर्जस्वित्समाहित–

१. का.ल.सा.सं. ४.३
२. तत्रैव, वृत्तौ
३. का.ल. सा. सं. ल.वृ. – ६.७५ वृत्तौ

लक्षणालङ्कारयोगो वाच्यः। एवं सर्वस्यापि ध्वनेः प्राचीनालङ्कारिक-प्रोक्तपर्यायोक्तरसवदादिष्वलङ्कारेष्वन्तर्भावात् सर्वोऽपि ध्वनिर्नालङ्कार-व्यतिरिक्त इति प्रतीहारेन्दुराजस्य प्रतिपत्तिः।

ध्वन्यभाववादिना लघुवृत्तिकारेण प्रतीहारेन्दुराजेन ध्वनेरलङ्कारेष्व-न्तर्भावं प्रदर्शयता भट्टोद्भटानुयायित्वमेव संसूचितम्। यद्यपि तेन स्पष्टतः ध्वनिरलङ्कारव्यतिरिक्तत्वेन निषिद्धः किन्तु तेषां विवेचनेन ध्वनेरङ्गीकार एव प्रतीयते। यतो हि प्रतीयमानर्थस्य प्राधान्यं तेन न न्यक्कृतम्। प्रतीयमानार्थस्य प्राधान्ये एव ध्वनिः, अप्राधान्ये तु पर्यायोक्तादयोऽलङ्कारा इति ध्वनिवादिनां सिद्धान्तः। अतः प्रधानभूतस्य प्रतीयमानार्थस्यालङ्कारेष्वन्तर्भावः सर्वथाऽनुपपन्नः। तस्य तु ध्वनित्वमेव सिद्धम्। अर्थात् प्रधानभूतस्य प्रतीयमानार्थस्यालङ्कार्यत्वमेवाभ्युपपन्नं न पुनरलङ्कारत्वम्। यत् 'स्वाम्यलङ्करणका भृत्या' इति लोकन्यायेन प्रधानस्यापि प्रतीयमान-स्यालङ्कारत्वं प्रदर्शितं तदप्यनुचितमेव। वस्तुतस्तदानीं तस्य अन्यालङ्कर-णत्वाद् गौणत्वमेव भवति न तु प्राधान्यम्। तत् तु ध्वनिवादिनां निकाये गुणीभूतव्यङ्ग्यविषयत्वेनास्ति प्रतिपादितम्। अन्यत्रालङ्कार्यत्वेन स्थितो ध्वनिः सर्वथा प्राधान्यमेव भजते।

स्वयं प्रतीहारेन्दुराजेन ध्वनेः प्रथमं षट्प्रकारता पुनः विंशतिप्रकारता प्रतिपादिता। तेनोक्तं यत्- तदेवं वाचकशक्तिमूलेऽलङ्कारैकनियते वाच्यशक्तिमूले च रसादिविषये व्यञ्जकत्वे वाच्यस्य विवक्षितत्वैकरूपत्वम्। वस्त्वलङ्कारविषये तु वाच्यशक्तिमूले व्यञ्जकत्वे प्रत्येकं वाच्यस्य विवक्षितत्वाविवक्षितत्वाभ्यां द्विभेदता। अतस्तत्समाश्रयणेन त्रिविधप्रतीय-मानार्थनिष्ठस्यापि व्यञ्जकत्वस्य षट्प्रकारता भवति। एतेषां च षण्णां मध्याद् द्वयोर्भेदयोर्वाच्यस्याविवक्षोक्ता चतुर्षु च विवक्षितत्वम्। यत्र च विवक्षितत्वं तत्र वाच्यस्य स्वतः सम्भवित्वात् प्रौढोक्तिमात्रनिष्पादितशरीरत्वाच्च द्वैविध्यम्। अतस्तत्र तस्याष्टौ भेदा भवन्ति। एते चाष्टौ भेदा वाच्यस्य यत्राविवक्षा तद्विषयाभ्यां पूर्वोदिताभ्यां द्वाभ्यां भेदाभ्यां सङ्कलिताः सन्तो दश सम्पद्यन्ते। अत एव तु पदवाक्यप्रकाश्यताया द्वैगुण्यं भजमाना विंशतिर्भवन्ति।

वर्णसंघटनाप्रबन्धाधारस्य व्यञ्जकत्वस्य कृत्तद्धितादिगतस्य च पदवाक्यानु-प्रवेशेनैवाविर्भावात्। अन्ते पुनः प्रतीहारेन्दुराजेनाधोलिखिताः कारिका अपि प्रदत्ताः।

**विवक्ष्यमविवक्ष्यं च वस्त्वलङ्कारगोचरे।**
**वाच्यं ध्वनौ विवक्ष्यं तु शब्दशक्तिरसास्पदे।।**

**भेदषट्के चतुर्द्धा यद्वाच्यमुक्तं विवक्षितम् ।**
**स्वतः सम्भवि वा तत्स्यादथवा प्रौढिनिर्मितम् ।।**

**दश भेदा ध्वनेरेते विंशतिः पदवाक्यतः ।**
**प्रधानवत् गुणीभूते व्यङ्ग्ये प्रायेण ते तथा ।।**[१]

अनया खलु पर्य्यालोचनया निष्पद्यते यत् काव्ये अलङ्कारस्यैव प्राधान्यं ब्रुवाणोपि प्रतीहारेन्दुराजो नास्ति सर्वथा ध्वनिध्वंसकः। यद्यपि तेन ध्वनेः संक्षेपतः चर्चा कृता किन्तु तत्रैव ध्वनेः प्रमुखा भेदप्रभेदा निर्दिष्टाः येन ध्वनिं प्रति तस्य आन्तरिको मृदुभावः परिप्रकाशितो भवति।

## प्रतीहारेन्दुराजाभिमतस्य ध्वनिभेदस्य तालिका–

**ध्वनिः**

| **वाचकशक्त्याश्रयः** | **वाच्यशक्त्याश्रयः** | |
|---|---|---|
| (विवक्षितवाच्यरूप एव) | विवक्षितवाच्यरूपः | अविवक्षितवाच्यरूपः |
| **(१) अलङ्काररूपः** | **(२) अलङ्काररूपः** | **(५) अलङ्काररूपः** |
| **स्वतः सम्भवी** | **स्वतः सम्भवी** | पदप्रकाश्यः |
| पदप्रकाश्यः | पदप्रकाश्यः | वाक्यप्रकाश्यः |
| वाक्यप्रकाश्यः | वाक्यप्रकाश्यः | **(६) वस्तुरूपः** |
| **प्रौढोक्तिमात्रनिष्पन्नशरीरः** | **प्रौढोक्तिमात्रनिष्पन्नशरीरः** | पदप्रकाश्यः |

---

१. ल. वृ. ६ उपान्तश्लोकः

पदप्रकाश्यः पदप्रकाश्यः वाक्यप्रकाश्यः

वाक्यप्रकाश्यः वाक्यप्रकाश्यः

**( ३ ) <u>वस्तुरूपः</u>**

**स्वतःसम्भवी**

पदप्रकाश्यः

वाक्यप्रकाश्यः

**प्रौढोक्तिमात्रनिष्पन्नशरीरः**

पदप्रकाश्यः

वाक्यप्रकाश्यः

**( ४ ) <u>रसादिरूपः</u>**

पदप्रकाश्यः

वाक्यप्रकाश्यः

**प्रौढोक्तिमात्रनिष्पन्नशरीरः**

पदप्रकाश्यः

वाक्यप्रकाश्यः

## अग्निपुराणकारः ( ९०० ई० सम्भावितः )

पुराणसाहित्ये प्रथितेषु अष्टादशपुराणेषु अग्निपुराणस्यापि परिगणनं भवित।

अग्निपुराणे ३३६ तः ३४६ आध्यायपर्यन्तं काव्यशास्त्रविषयिणी चर्चा सम्प्राप्यते। तत्र समागतेयं काव्यचर्चा संग्रहात्मिकैव परिलक्ष्यते। यतो हि बहुविधालङ्कारिकाणां सिद्धान्तसारोऽत्र समुल्लिखितोऽस्ति कस्यापि एकविधस्य मतस्य नास्त्यत्र संस्थापनं सिद्धान्ततः। अग्निपुराणकारेण न हि केनाप्यलङ्कारशास्त्रीय-सिद्धान्तसंस्थापनभूतप्रयोजनेन संग्रथितं काव्यशास्त्रम् अपितु तात्कालिकसमग्रसाहित्यसामग्रीसंवेदनार्थमेवाग्निपुराणे काव्यशास्त्र-संग्रहात्मको भागः संयोजित इति संलक्ष्यते पुराणस्यास्याध्ययनेन।

साहित्यशास्त्रस्य मुख्यं स्रोतः भरतकृतनाट्यशास्त्रमुपजीवयति अग्निपुराणं भूम्ना। बहुविधाः कारिकाः नाट्यशास्त्राद् आनुपूर्वीकत्वेनोद्धृताः सन्ति अग्निपुराणे। तथा तत्र ३३९ तमस्याध्यायस्य षष्ठे श्लोके भरतस्य नाम्ना समुल्लेखो द्रढयति तथ्यमिदम्। काव्यस्वरूपनिर्णये एवं विभिन्नालङ्कारनिरूपणे च नैकाः कारिकाः भामहस्य काव्यालङ्काराद् दण्डिनः काव्यादर्शाच्चाविकलम् आहृताः सन्ति। अतः प्राचीनालङ्कारिकाणां सिद्धान्तसारमेव प्रत्याययितुं प्रयततेऽग्निपुराणकार इत्यहं प्रत्येमि।

पुराणानां कालनिर्धारणमतीव दुष्करं कर्म विद्यतेऽद्यापि। अतोऽग्निपुराणस्यापि कालनिर्धारणं सहजरूपेण न शक्यसम्भवम्। तथापि कैश्चिद् विन्दुविशेषैः वर्तमानाग्निपुराणं प्राचीनाग्निपुराणस्य नवीनं कलेवरमिति ब्रुवाणाः समीक्षकास्तत्रापि विशेषतः श्रीमन्तः पी.वी.काणे एवं एस. के. डेमहोदया अग्निपुराणान्तर्वर्त्तिनः काव्यशास्त्रीयभागस्य रचनाकालो नवमी शताब्दीति सिद्धान्तयन्ति। तस्य मुख्यं कारणम्, तत्र स्पष्टतया ध्वनेः समुल्लेखोऽस्ति। अतः आनन्दवर्धनकाल एवाग्निपुराणान्तर्गतकाव्यभागस्य संग्रथनं समुद्घोषयन्ति समीक्षणसरणिसम्पन्नाः समीक्षकाः।

## अग्निपुराणकारस्यालङ्कारवादः तस्य मीमांसा

अग्निपुराणे समधिगतस्य काव्यशास्त्रीयसिद्धान्तस्य समीक्षणेन ज्ञायते यत् प्राचीनालङ्कारिकाणामेव सिद्धान्तसारः तत्रास्ति निर्दिष्टः। अतः स्वत एव तत्र अलङ्कारप्राधान्यवादः परिस्फुरति। तत्र ध्वनिर्नास्ति विशदं विवेचितः। यद्यपि तत्र ध्वनेः स्वल्प एव समुल्लेखः तथापि तस्य अलङ्कारान्तर्गतत्वेन वर्णनेन अग्निपुराणकारस्य ध्वनिविषयको विचारः स्फुटो भवति। तेन आक्षेपालङ्कारे ध्वनिमन्तर्भाव्य ध्वन्याक्षेपालङ्कारयोस्तुल्यत्वमभाणि। तेनोक्तं यत्–

**श्रुतेरलभ्यमानार्थो यस्माद् भाति सचेतसाम् ।**
**स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः ।।**

**शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्जनम्।**
**प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया।।**
**तमाक्षेपं ब्रुवन्त्यत्र............।**[१]

वस्तुतः तन्मते अलङ्कारातिरिक्तः कश्चिद् ध्वनिर्नास्ति। तेन प्रतिपादितं यत्- श्रुतेरलभ्योऽर्थः यस्मात् सहृदयैरनुभूयते, असौ ध्वनिः। यथा ध्वनौ शब्दार्थौ स्वात्मानमुपसर्जनीकृत्यार्थं व्यङ्क्तः तथैव आक्षेपेऽपि विशेषमर्थमभिधातुमिष्टस्य वस्तुनः प्रतिषेध इव भवति। तद्दृष्ट्या आक्षेपालङ्कारे विशेषोऽर्थः साक्षात् शब्देन नोच्यते परमभीष्टस्य वस्तुनः प्रतिषेधात् परिस्फुरति। अतः आक्षेपालङ्कारे ध्वनौ च विशेषार्थस्य स्वशब्देनाप्रतिपादनात् द्वयोस्तुल्यत्वमेव प्रतिपन्नं भवति।

उपर्युक्तविश्लेषणेन निष्पद्यते यद् अग्निपुराणकारस्य कोऽपि परि-निष्ठितः सिद्धान्तो नास्ति। अग्निपुराणान्तर्गतकाव्यशास्त्रीयभागस्य संग्रथना आनन्दवर्धनाचार्यस्य काले संजातेति सम्भाव्यते। तदानीं ध्वनेश्चर्चा विदुषां समवाये आसीत् किन्तु तावद्ध्वनिस्तथाप्रतिष्ठापदवीमभिषिक्तो नासीत् यथाऽलङ्कारसिद्धान्तः। फलतः अग्निपुराणकारोऽपि ध्वनिसिद्धान्तमपरीक्ष्यो-ल्लिखितवान् आक्षेपालङ्कारे चान्तर्भावितवान् तथात्मानं ध्वन्यभाववादे निक्षिप्तवान् इति।

**आचार्यभट्टनायकः** (९५० ई० अनुमानतः)

ध्वनिविरोधिष्वाचार्येषु भट्टनायकोतीव प्रमुखः। तेन प्रणीतो ग्रन्थो हृदयदर्पणाख्यो नास्ति समुपलब्धोऽद्यावधि। तस्य सिद्धान्तसारोऽवसीयते महामहेश्वराचार्याभिनवगुप्तरचिताभिनवभारती- ध्वन्यालोकलोचनटीकाभ्याम्। तस्य ग्रन्थो 'हृदयदर्पण' एव परवर्त्तिनामालङ्कारिकाणां समुल्लेखादस्ति सुविदितः। व्यक्तिविवेककारो महिमभट्टःसविषण्णं ब्रूते यत्-

**सहसा यशोऽभिसर्त्तुं समुद्यताऽदृष्टदर्पणा मम धीः ।**
**स्वालङ्कारविकल्पप्रकल्पने वेत्ति कथमिवावद्यम् ।।**[२]

१. अ.पु., ३४५/१४-१६
२. व्य. वि. १.४

भट्टनायकस्य हृदयदर्पणमदृष्ट्वैव ध्वनिसिद्धान्तविखण्डने प्रवृत्तोऽस्मि। अर्थात् महिमभट्टस्य ध्वनिध्वंसनात् पूर्वमेव भट्टनायकेन ध्वनिसिद्धान्तो ध्वंस्तः हृदयदर्पणाख्ये ग्रन्थ इतीदमाशयान्तरं महिमभट्टवचनस्य। अलङ्कारसर्वस्वस्य टीकाकारेण जयरथेनापि भट्टनायको हृदयदर्पणकर्तृत्वेनास्ति समुल्लिखितः। अतः प्रायः सर्वेऽपि साहित्यसमीक्षकाः अनुपलब्धं हृदय-दर्पणाख्यमेव ग्रन्थं भट्टनायकस्य कृतित्वेनाङ्गीकुर्वन्ति। अयमस्माकं महद् दौर्भाग्यं यद् महिमभट्टस्य कालादेवास्य ग्रन्थस्यानुपलब्धिः, यतो हि महिमभट् अेनापि ग्रन्थोऽयं न पठितः न च दृष्टः। ग्रन्थोऽयं भट्टनायकेन ध्वनिध्वंसनाय विरचित इति महामहेश्वराभिनवगुप्तपादाचार्येण लोचने समुदाहृतसन्दर्भाज्ज्ञायते।

कश्मीरदेशीयोयं भट्टनायक आनन्दवर्धनात्परवर्ती अभिनवगुप्तपादाच्च पूर्ववर्त्ती रसप्राधान्यवाद्याचार्यः साहित्यविद्यायाः। भट्टनायकञ्चोद्दिश्य कृतैरभिनवगुप्तपादेन बहुविधैराक्षेपैः प्रतीयते यद् भट्टनायकोऽभिनवगुप्तपादस्य नातिपूर्ववर्त्ती परं किञ्चत्पूर्ववर्त्ती। हृदयदर्पणग्रन्थोऽपि अभिनवगुप्तपादेन सम्यगधीत एव प्रतिभाति। अतो दशमशतकस्य मध्यभागः (९५० ई०) एव भट्टनायकस्य स्थितिकालत्वेन स्थिरीकर्त्तुं शक्यते। भट्टनायकस्य हृदयदर्पणाख्यो ग्रन्थः यावन्नोपलभ्यते तावत्तस्य स्थितिकालनिर्धारणस्यापि किं फलम्? भट्टनायकविषयकाः बहुविधाः प्रश्ना अद्यापि तथैवानुत्तरिताः सन्ति तस्य ग्रन्थाभावादिति।

**भट्टनायकाभिमतः शब्दस्याभिधाभावकत्वभोजकत्वव्यापाराः—**

भट्टनायकस्य सम्प्रति सम्प्रचारितसिद्धान्तस्य आधारत्वेन समाद्रियन्ते ध्वन्यालोकलोचनटीकायाः सन्दर्भाः अभिनवभारत्याश्च सन्दर्भाः। अर्थात् अत्राहृतैः सन्दर्भैरेव भट्टनायकस्य साहित्यशास्त्रीयसिद्धान्तस्य ज्ञानं भवति। अयं काव्ये रसस्यैव प्राधान्यमङ्गीकरोति। तन्मते न सम्भवति रसाभिव्यक्ति-र्व्यञ्जनाव्यापारेणपितु तस्य शब्दस्यैवाभिधाभावकत्वभोजकत्वव्यापारैर्भोगः समुपजायते। तेन व्यञ्जनानाम्नीं शब्दशक्तिं निरुध्य अभिधातिरिक्तं भावकत्वं भोजकत्वञ्चेति व्यापारद्वयमाविष्कृतम्। अतस्तस्याभिमतास्त्रयो व्यापाराः परमप्रमुखाः समीक्षाशास्त्रे।

१. वाच्यविषयकः शास्त्रप्रसिद्धाभिधाव्यापारः।

२. रसविषयको विभावादिसाधारणीकरणात्मा भावकत्वव्यापारः।

३. सहृदयविषयको भोजकत्वव्यापारश्च उद्धृतमभिनवगुप्तेनाभिनवभारत्याम्

**यथा–**

**अभिधा भावना चान्या तद्भोगीकृतिरेव च।**
**अभिधाधामतां याते शब्दार्थालङ्कृती, सतः।।**

**भावनाभाव्य एषोऽपि शृङ्गारादिगणोऽभवत्।**
**तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः।।**[१]

**लोचने यथा–**

**'अभिधायकत्वं वाच्यविषयं, भावकत्वं रसविषयं, भोक्तृत्त्वं सहृदयविषयमिति त्रयोंशभूता व्यापाराः।'**[२]

एवं भावकत्वव्यापारेण भावानां साधारणीकरणं, पुनः साधारणीकृतानां भावानां भोजकत्वव्यापारेण रसरूपेण भोगो न पुनः व्यञ्जनाव्यापारेण रसाभिव्यक्तिरिति तस्य सिद्धान्तः। तेन काव्ये ध्वनिवादिभिः स्वीकृतं वस्त्वलङ्कारयोश्चमत्कारमपि प्रत्याख्याय केवलं रसस्यैव चमत्कारातिशयः सिद्धान्तितः। वस्तुतो रसप्राधान्यवादी भट्टनायकः। तन्मते काव्यनाट्ययोः सहृदयहृदयावर्जकता रसास्वादेनैव सम्भवति। अयं काव्यस्य सारभूततया रसमेवाख्याति। लोचने यथा–

यथाह भट्टनायकः–

**वाग्धेनुर्दुग्ध एतं हि रसं यद्बालतृष्णया।**
**तेन नास्य समः स स्यात् दुह्यते योगिभिर्हि यः।।**[३]

---

१. अ.भा. ६. रससूत्रव्याख्याने

२. ध्व.लो.लो. २.४. वृत्तौ

३. तत्रैव

ध्वनिवादिनोऽपि काव्ये रसस्यैव प्राधान्यं वदन्ति। किन्तु ते यथा रसस्य ध्वननमङ्गीकुर्वन्ति तथैव वस्त्वलङ्कारयोरपि। अतस्ते वस्त्वलङ्कारयोरपि काव्ये परमं महत्वं प्रतिपादयन्ति अभिनवगुप्तपादेनानन्दवर्धनस्य सिद्धान्तं विशदयता प्रोक्तं यत् प्राधान्येन काव्यस्यात्मा रस एव, वस्त्वलङ्कार-ध्वनी तु सर्वथा तं प्रति पर्य्यवस्येते। अतस्तेनाभ्यामुपस्कारकत्वं रसस्य प्रदर्शितम्। परं भट्टनायकमते तु रसस्यैव महत्त्वम्।

**भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण।**
**गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण।।**

इत्यत्रगाथायां यत्काव्यचारुत्वं वस्तुरूपिणोऽर्थस्य ध्वननात् प्रोक्तं ध्वनिवादिभिस्तत्तु भट्टनायकेन सर्वथा प्रत्याख्यातम्। तेनात्र भयानकरसावेशकृत एव चमत्कारः सम्प्रदर्शितः। लोचने यथा– 'यत्तु भट्टनायकेनोक्तम्– इह दृप्तसिंहपदप्रयोगे धार्मिकपदप्रयोगे च भयानकरसावेशकृतैव निषेधावगतिः। तदीयभीरुवीरत्वप्रकृतिनियमावगममन्तरेणेकान्ततो निषेधावगत्यभावात्।' अतो भट्टनायकमतेऽत्र भयानकरसास्वादेनैव काव्यचारुत्वम्। स च रसास्वादो भावकत्वभोजकत्वसहकृतेनाभिधाव्यापारेण सम्भवति।

एवं भट्टनायकः व्यञ्जनाव्यापारं विप्रतिपद्य तत्स्थाने भावकत्वभोजक-त्वव्यापारौ स्वीकरोति। फलतोऽभिनवगुप्तपादरुय्यकादिपरवर्त्तिभिराचार्यैरसौ काव्ये व्यापारप्राधान्यवादित्वेन समालोचितः। यथाऽलङ्कारसर्वस्वे– 'भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्याभ्युपगतस्य काव्यांशत्वं ब्रुवता न्यग्भावित-शब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम्'। काव्ये व्यापारप्राधान्यवादिनो भट्टनायकस्यायमाशयः प्रतिभाति यद् वेदेषु शब्दस्य प्राधान्यम्। तत्र यथोक्तं तथैव गृह्यते राजाज्ञावत्। इतिहासादिषु चार्थस्य प्राधान्यम्। तत्र सुहृद्वचन-वदर्थस्योपयोगः। परं काव्ये शब्दार्थयोः द्वयोर्न्यग्भावः। काव्ये शब्दैरुक्ता अर्था यदा भावकत्वव्यापारेण साधारणीकृतस्वरूपा उपस्थिता भवन्ति तदा हृदयसंवादमादधाना ते भोजकत्वव्यापारेण सहृदयानामास्वादविषयतामुपयान्ति। अतः साधारणीकृता अर्था भोजकत्वव्यापारेण भुज्यमाना रसरूपतां यान्ति। तथा सति वेदशास्त्रादिभ्यः प्रतिपादिताः शब्दार्थाः साधारणीकरणाभावाद्रसं प्रति

न कारणायन्ते। रसकारणसामग्र्यभावान्न जायते तत्र रसास्वादः। परं काव्ये गुणालङ्कारोपादानेन साधारणीकृतस्वरूपाः शब्दार्थाः सुनिपुणं सचेतसां मनांस्यनुरञ्जयन्तो रसानुभूतौ विच्छित्तिविशेषं जनयन्ति। अत एव ये केवलं शब्दार्थशासनज्ञानकृतपरिश्रमाः शाब्दिकाः शुष्कतर्ककर्कशधियस्तार्किकाः वेदविहितविधिनिषेधानुयायिनश्च मीमांसकास्ते साधारणीकरणात्मकं भावकत्वव्यापारमजानन्तो रसात्मनः काव्यस्य लेशमात्रमप्यास्वादमास्वादयितुमसमर्थाः। 'काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्।' इति ब्रुवता भट्टनायकेन स्वकीयं भावकत्वभोजकत्वव्यापारद्वयप्राधान्यवादि दर्शनं संस्थापितम्। यतोहि भावकत्वव्यापारमहिम्ना साधारणीकृता रत्यादयो भावाः भोजकत्वव्यापारमहिम्ना सहृदयैर्भुज्यन्ते। लोचने यथा–

तेन यथाह भट्टनायकः–

**शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।**
**अर्थतत्त्वेन तु युक्तं वदन्त्याख्यानमेतयोः ।**
**द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत् ।।**

काव्यप्रकाशे यथा–

**.........विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते।**[१]

उपर्युक्तपर्यालोचनया निष्पद्यते यद् भट्टनायकेन रसास्वादनायाभिधाभावकत्वभोजकत्वव्यापाराः शब्दस्याङ्गीकृताः काव्ये नाट्ये च। एभिर्व्यापारैरेव काव्यस्य काव्यत्वं प्रतिपाद्यते यत्तु भिद्यते सर्वथा शास्त्रेतिहासेभ्यः।

### भट्टनायकस्य भुक्तिवादः–

नाट्यशास्त्रस्य रसनिष्पत्तिसूत्रव्याख्यातृष्वाचार्येष्वन्यतमो भट्टनायकः। स च भुक्तिवादस्य प्रतिष्ठापकत्वेन समादृतोऽस्ति साहित्यशास्त्रे। तेन संस्थापितस्य

१. काव्यप्र. ४.२८ वृ.

रसभुक्तिवादस्य विशदं विवेचनमभिनवभारत्यां प्राप्यते। तस्यैव सारसंक्षेपो मम्मटभट्टेन स्वकाव्यप्रकाशे भट्टनायकनामतः प्रदत्तः। भट्टनायकस्य रसभुक्तिवादः काव्यशास्त्रे नितरां प्रसिद्धोऽस्ति। अनेन भट्टलोल्लटस्य रसोत्पत्तिं शङ्कुकस्यानुमितिम् आनन्दवर्धनस्य च रसाभिव्यक्तिं विदूष्यभावकत्वभोज-कत्वव्यापारमहिम्ना जायमानो रसभोगो युक्त्या व्यवस्थापितः। यथा काव्यप्रकाशे–

**न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यजयते अपितु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्वि-श्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टनायकः।**[१]

तेन सर्वप्रथमं रसप्रतीतिः सर्वथा प्रत्याख्याता। उक्तं च तेन यद् रसप्रतीतिः न ताटस्थ्येन नात्मगतत्वेन वा भवितुमर्हति। रसो यदि अनुकार्ये रामादौ अथवा अनुकर्तरि नटादौ तर्हि अनुकार्येण रामेण अनुकर्त्रा नटेन वा आस्वाद्यमाना रतिस्तद्गतत्वात् तयोरेव प्रीतीर्विषयतामुपेयात् न तु तटस्थस्य सामाजिकस्य। अतस्ताटस्थ्येन रसप्रतीतिः न सम्भवति, न सम्भवति चात्मगतत्वेन। आत्मगतत्वेन रसप्रतीतौ रसोत्पत्तिरेवाभ्युपगता भवति, सा चासम्भवैव। तत्र सीतादीनां ये भुजचालनकटाक्षपातादय उद्दीपकास्ते राममुद्दिश्य कृतास्तस्यैव हृदि वासनात्मतया स्थितां रतिमुद्दीपयन्ति न सामाजिकानाम्। उद्दीपनविभावैरुद्दीपिता रतिस्तु रामेणैवास्वाद्यते न पुनः सामाजिकैः। विभावादिकारणसामग्रीद्वारा रामस्य हृदये वर्तमानायाः रतेः समुद्बोधस्तदुद्दिश्य-कृतत्वात् न तु सामाजिकानाम्। एवं स्वात्मगतत्वेनापि परगतैरुद्दीपनविभावैः सामाजिकेषु रसोत्पत्तिरसम्भवा।

तत्र मानुषीत्वेन सीतादिषु कान्तात्वबुद्धिर्भवतीति कृत्वा सीतादयः कान्तात्वेनोपस्थिता भवन्ति। तत्र कान्तात्वं सहृदयगतरत्यादिभावोद्बोधे निमित्तीभवतीति चेन्न, रत्यादिवासनाविकासहेतुविभावतां प्राप्तानां सीता-दीनामाराध्यत्वेन नायिका–सामान्यसंवेदने प्रतिबन्धकत्वात्। अर्थात् सीतादयः

१. काव्यप्र. ४.२८ वृ.

देवरूपत्वात् पूज्याः न ते सहृदयहृदये रत्यादिवासनाविकासे सामान्यकान्तात्वेन विभावत्वमुपयान्तीति हेतुना न रसास्वादः।

ननु नाट्ये सीतादर्शनेन काव्ये च सीतादिस्मरणेन सहृदयानां स्वकान्तास्मरणं भवति तथा रत्यादिवासनोद्बोधः, येन रसप्रतीतिरिति चेन्न, कान्तावतामेव रसप्रतीतिरकान्तावताञ्च रसास्वादासम्भवात्। नहि नाट्ये काव्ये वा कान्तावतामेव रसप्रतीतिर्न वा कान्ताविरहितां रसप्रतीतिबाधः कश्चन। अतोऽयमपि पक्षोऽयुक्तः।

नहि सामाजिकानां रसोद्बोधे रामादिगतस्थायिज्ञानं प्रयोजकं स्यात्, उत्साहादियुक्तस्य रामस्य स्मरणाभावात्। यतो हि अनुभूतपूर्व एवार्थः स्मृतिं जनयति, न पुनरननुभूतपूर्वः कश्चित्। न ह्युत्साहादिमान् रामः पूर्वं दृष्टो येन तद्गतोत्साहस्मरणाद् रसोद्बोधः स्यात्।

न हि शब्दानुमानाद् वा रसप्रतीतिः। तथात्वे तस्याः सहृदयहृदया-वर्जकत्वाभावात्। न हि अनुमानाच्छब्दाद् वा प्राप्तोऽर्थः सरसो भवति। रसोत्पत्तिरपि विसङ्गतैव। करुणरसयुक्ते काव्ये क्रन्दनाश्रुपातमूर्च्छामरणादि-भिर्दुखोत्पत्तिः स्यात्, न रसास्वादः।

अभिव्यक्तिरपि रसस्यासम्भवा। अभिव्यक्तिः पूर्वसिद्धस्य वस्तुनो जायते नापूर्वसिद्धस्य। रसो न पूर्वसिद्धो न वा परसिद्धः, अपितु विभावादीनां संयोगकाले एव जायते। अतस्तात्कालिकी खलु अभिव्यक्तिः। यतो हि रसः विभावादिजीविताविधिः। अतो यावद् विभावादयस्तावदेव रसबोधस्तेषामपगमे तु रसस्याप्यपगमः।

ननु वासनात्मकतया पूर्वतः स्थितस्य रत्यादेरभिव्यक्तिरिति चेन्न, रत्याधिकाभिव्यक्तये तदुपायभूतस्याधिकोपार्जने सहृदयानां प्रवृत्तेः। अर्थात् यथा लोके अभिव्यञ्जकस्य मन्द्रतीव्रत्वाभ्यां वस्तुनः स्फुटत्वेऽपि मन्द्रतीव्रत्वे भवतस्तथैव रसेऽपि स्यात् क्वचिच्चास्फुट एवावभासते किन्तु नैवम्। रसानुभूतिसमये सत्त्वोद्रेकादखण्ड एवानन्द एकाकारः समनुभूयते सहृदयैः। न हि तत्र तत्साधनीभूतविभावादिष्वल्पत्वाधिक्यैः रसाभिव्यक्तावल्पत्वमाधिक्यं

वा दृश्यते। येनाभिव्यक्तिरेव नास्ति रसस्येति सिद्धम्। अतो रसाभिव्यक्तिपक्षोऽपि सर्वथाऽसङ्गतः। फलतः न रसस्य प्रतीतिस्ताटस्थेनात्मगतत्वेन वा, नोत्पत्तिः न चाभिव्यक्तिरानन्द-वर्धनादिसम्मतेति त्रयोऽपि पक्षा दुष्टत्वादग्राह्याः।

अनेन खलु क्रमेण भट्टनायकेन रसस्य प्रतीतिरुत्पत्त्यिभिव्यक्तिपक्षान् निषिध्य स्वकीयो रसभुक्तिपक्षः प्रतिष्ठापितः। तेनाभिधाभावकत्वभोजकत्व-रूपास्त्रयो व्यापाराः काव्ये प्रवर्त्तिताः। तत्र प्रथमो व्यापारोऽभिधा। येन सर्वप्रथमं काव्ये वाक्यार्थप्रतीतिर्जायते। नायं शुद्धोभिधाव्यापारः व्यापारान्तरालिङ्गितत्वात्। यदीतरव्यापारानालिङ्गतोऽसौ काव्ये स्यात् तदा किं पार्थक्यं भवेद् व्याकरणमीमांसाशास्त्रेभ्यः काव्यस्य? अतः शुद्धाभिधातिरिक्तः कश्चिदन्योऽपि व्यापारः काव्ये अवश्यमन्वेषणीयः शास्त्रेतिहासेभ्यः काव्यस्य वैलक्षण्यं विदधातुम्। स च व्यापारो भावकत्वमेव। यद्वशात् सर्वेऽप्यभिधया बोधिता अर्थाः साधारणीकृतस्वरूपाः वैचित्र्यं जनयन्तः शास्त्रेषु प्रयुक्तेभ्यः शब्दार्थेभ्यः वैलक्षण्यमुत्पादयन्ति काव्यस्य। अयं हि भावकत्वव्यापारः काव्ये हृदयसंवादमाविष्कुर्वन् विभावादिकं साधारण्येनोपस्थापयन् चमत्कृतिं जनयन्ति सहृदयानां हृदयेषु। अर्थादनेनैव व्यापारेण रामसीतादिसम्बन्धिनो भावाः रामसीतादिविशेषांशं विहाय साधारण्येन प्रतीयन्ते। रामसीतादिभिरनुकार्यैरनुभूता अनुकर्त्तृभिर्नटैश्चाभिनीता एते रत्यादिका भावा रामत्वनटत्वविशेषसम्बन्ध-रहिता भावकत्वव्यापारमहिम्ना साधारणीभूता नाट्ये काव्ये च सामाजिकैरा-स्वाद्यते।

साधारणीभूतत्वेन न तत्र पूज्यबुद्धिसद्भावो न करुणादौ रसे दुःखानुभवो न वा स्वकीयरतेरास्वादाल्लज्जाजुगुप्साभावः। भावकत्वव्यापारवशान्निर्विशेषा रतिरास्वाद्यते सामाजिकैः। अतो भावानां साधारणीकरणं भावकत्वव्यापार-जनितमिति स्फुटं भट्टनायकस्य मतम्।

भावकत्वव्यापारेण साधारणीकृता रत्यादयो भावाः तृतीयेन भोजकत्व-व्यापारेण भुज्यन्ते। सत्त्वरजस्तमोमयं हि चेतो भवति। तत्र रजस्तमस्यभिभूय जायमानात् सत्त्वोद्रेकादात्मचैतन्यात्मिकायाः वृत्तेः विषयान्तरेभ्यो व्यावर्तनं जायते।

तस्याश्च विगलितवेद्यान्तरे परमानन्दे विश्रान्तिर्भवति। अयमेव भोजकत्वव्यापारी यद्वशाद् आत्मचैतन्यात्मिकाया वृत्तेः प्रकाशानन्दे विश्रान्ते रसस्य भोगः।

अतोवाक्यार्थाभिधायकेन काव्यार्थविषयेण प्रसिद्धाभिधाव्यापारेण, रसादिविषयेण साधारणीकरणात्मना द्वितीयेन भावकत्वव्यापारेण, सहृदयविषयेण तृतीयेन भोजकत्वव्यापारेणेति त्र्यंशेन व्यापारेण वासनारूपेण सहृदयहृदये विद्यमानो रत्यादिस्थायिभावो रसतामेति–इति भट्टनायकस्य रसनिष्पत्तिविषयको भुक्तिवादः।

## अभिनवगुप्तेन कृता भट्टनायकसमीक्षा

रसाभिव्यक्तिवादस्य प्रबलसमर्थकेनाभिनवगुप्तपादेन भट्टनायकोद्भावितस्य भावकत्वभोजकत्वव्यापारद्वयस्य परिकल्पनं विदूष्य व्यञ्जनायामेवान्तर्भावितम्। तेन प्रतिपादितं यत् न केवलं काव्यशब्दा भावकाः न वा केवलमर्थाः। अर्थज्ञानाभावे काव्याशब्दानां भावकत्वमनुपपन्नमेव। अर्थस्यानभिधानेऽपि न ह्यर्थानां भावकत्वम्। अतो द्वयोर्भावकत्वम् अङ्गीकार्यम्। न कदापि अनुपस्कृतौ शब्दार्थौ रसं भावयितुं पारयतः। तथा सति शास्त्रेतिहासादिषु सरसत्वं स्यात्। अतो वाच्यवाचकभावपर्यवसितौ गुणालङ्कारोपस्कृतावेव शब्दार्थौ रसान् भावयत इति स्वीकार्यम् नहि सीतायामनुरक्तो राम इति वचनेन रसस्य भावकता सम्पद्यते। अपितु काव्ये गुणालङ्कारसमवेतत्वेन नाट्ये चातोद्यगानाभिनयसामग्रीवैशिष्ट्येन रसो भाव्यते। रसस्येयं भावना न व्यञ्जनविरुद्धा। वस्तुतः शब्दार्थौ रसं व्यङ्क्तः। यावच्छब्दार्थौ न व्यञ्जकौ तावन्न रसोदयः। अतः रसाभिव्यक्तिः गुणालङ्कारोपस्कृतवाच्यवाचकभावपर्यसितसामर्थ्यैर्व्यञ्जकैः शब्दार्थैरेव भवति। अत्र रसभावनायां शब्दार्थयोर्व्यञ्जकत्वं स्वतः सञ्जातम्। तेन भट्टनायकस्येयं भावना त्रिधा विभक्ता साधनसाध्येतिकर्तव्यतारूपेण। तत्र साधनांशे व्यङ्ग्यव्यञ्जकभावः स्वयमुपपन्नः शब्दार्थयोः स्वार्थमुपसर्जनीकृत्य व्यङ्ग्यार्थस्य व्यञ्जकत्वात्। रसभावनायां भट्टनायकोऽपि शब्दार्थयोर्गुणत्वे व्यापारप्राधान्यं स्वीचकार। प्रोक्तं तेन–

**'द्वयोर्गुणत्वे व्यापार-प्राधान्ये काव्यधीर्भवति।'**

साध्यस्तु रसः। गुणालङ्काराणां संयोजना व्यापारान्तरञ्चेतिकर्तव्यतांशः। एवं भट्टनायकस्य रसभावना त्रिधा विभक्ताऽपि साधनांशे व्यञ्जनाव्यापारात् सर्वथा ताटस्थ्यं न भजते। रसस्य स्वशब्दवाच्यत्वं तेनापि न विप्रतिपद्यम्। एवं रसस्य व्यङ्ग्यत्वं स्वतः सिद्धम्। तथा सति भावकत्वव्यापारो व्यञ्जनाया-मेवान्तर्हितो भवति तथैव भोजकत्वव्यापारोपि व्यञ्जनान्तःपाती। यतो हि भाविते रसे यो हि भोगः स तस्याभिव्यक्तिरेव। रसाभिव्यञ्जनमेव रसभोगः। अतो भट्टनायकेन रसभोगार्थं यस्तृतीयो व्यापारः कल्पितः स तु निरर्थक एव। केवलं व्यञ्जनयैव रसभावनं तद्भोगश्च प्राप्तः तत्किमर्थं व्यापारद्वयस्य परिकल्पनं शब्दे। एवं ध्वनिवादिनां मते व्यङ्ग्यव्यञ्जकभावस्यावश्यमङ्गीकरणाद् भावकत्वभोजकत्वव्यापारौ निरर्थकौ, तयोर्व्यञ्जनायामेवान्तर्भावात्।

भट्टनायकेन सिद्धान्तितो रसभुक्तिवादः महामहेश्वराचार्याभिनगुप्तपादेन समालोचितोऽपि काव्यशास्त्रे नितरां प्रसिद्धः। वस्तुतः तन्मते रत्यादिभावानां साधारणीकरणात्मा यो हि भावकत्वव्यापारः स तु परमोपादेयः। तन्महिम्नैव रत्यादीनां भावानां साधारण्येनास्वादः समुपजायते सहृदयहृदयेषु। असाधारणी-कृतैर्भावैः न कोऽपि सहृदयः रसानास्वादयितुं समर्थः। अभिव्यक्तिपक्षेऽपि स्वीकृतस्य साधारणीकरणस्याविष्कर्ता भट्टनायक एव। अतोऽयं भावकत्व-व्यापारो नूतनतयाविष्कृत इति हेतुना न प्रत्याख्येयः।

अलङ्कारसर्वस्वकारेण रुय्यकाचार्येण यद् भट्टनायको व्यापार-प्राधान्यवादीति कृत्वाक्षिप्तस्तदपि नोचितम्। यतो हि ध्वनिवादिनामाचार्याणामपि व्यञ्जनाव्यापारस्य प्राधान्ये महानाग्रहो दृश्यते। अन्यथा व्यङ्ग्यार्थे नास्ति महिमभट्टादीनां विप्रतिपत्तिः केवलं तैः व्यङ्ग्यार्थस्य व्यञ्जनया द्योतनं विरुध्यते। ध्वनिवादिभिः ध्वनिसिद्धान्ते व्यञ्जनाव्यापारप्राधान्यमेव सिद्धान्तितम्।

व्यञ्जनावादिभिः साधारणीकरणं रसाभिव्यक्तिरप्युभयं व्यञ्जनागम्यमेव प्रतिपादितम् तथा सति तत्र स्थितस्य कार्यकारणभावस्य कथमन्वयः? वस्तुतो भावकत्व्यापारः रसभुक्तौ कारणभूतः भोजकत्वव्यापारेण पुनः रसभोगः कार्यरूपत्वात्। रसास्वादवेलायामियं कार्यकारणभावशृङ्खला भट्टनायकेन भावकत्वभोजकत्वव्यापारद्वयेन सुनियोजिता, अभिव्यक्तिपक्षे सा विघटते

उभयस्य एकेनैव व्यञ्जनाख्यव्यापारेण युगपत्कालावच्छेदेन प्रतिपादनत्वाद्। प्रोक्तञ्चाभिनवभारतीकारेण तद्यथा – नहि रसनक्रिया चलन्क्रियावत् पर्यन्ते निष्पद्यतेऽपितु झटित्येव।

भट्टनायकविरोधिषु प्रबलतमोऽभिनवगुप्तपादः। यद्यपि तेन ध्वन्यालोकलोचने 'जैमिनीसूत्रे ह्येवं योज्यते न काव्ये' इति तेन 'भट्टनायकेन यद् द्विवचनं दूषितं तद्गजनिमीलिकयैव' चेति ब्रुवतातितरमाक्षिप्तोयं भट्टनायकः, तथापि साम्प्रतिकसाहित्यसमीक्षायां भट्टनायकस्यास्ति सुमहानादरः।

**धनञ्जय-धनिकौ** (९७४ तः ९९४ ई०, ९९४ तः १०१० ई०)

धनञ्जयो नाट्यशास्त्रपरम्परायामतीव प्रमुखं स्थानं भजते। तेन नाट्यशास्त्रीयसिद्धान्तानां संक्षेपेण दशरूपकाख्यो ग्रन्थो विरचितः प्रोक्तञ्च दशरूपकस्यारम्भे–

**उद्धृत्योद्धृत्य सारं यमखिलनिगमान्नाट्यवेदं विरञ्चि-**
**श्चक्रे यस्य प्रयोगं मुनिरपि भरतस्ताण्डवं नीलकण्ठः।**
**शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्म कः कर्त्तुमीष्टे**
**नाट्यानां किन्तु किञ्चित्प्रगुणरचनया लक्षणं संक्षिपामि।।**[1]

**व्याकीर्णे मन्दबुद्धीनां जायते मतिविभ्रमः।**
**तस्यार्थस्तत्पदैस्तेन संक्षिप्य क्रियतेऽञ्जसा ।।**[2]

वस्तुतो नाट्यशास्त्रादनन्तरमस्यैव ग्रन्थस्य प्रबलं प्रचारो जातो नाट्यविशेषान् प्रत्येतुं विदुषां समवाये। साहित्यदर्पणकारः कविराजो विश्वनाथः स्थलविशेषेषु भरतं नामतो बहुधा समुद्धरन्नपि स्वकीयग्रन्थे नाट्यप्रकरणस्याधारत्वेन 'एषा प्रक्रिया दशरूपोक्तरीत्यनुसारेण' – इति व्याहरन् दशरूपकमेव निर्दिशति। वस्तुतश्चतुःप्रकाशात्मकस्य धनञ्जयप्रणीतदशरूपकस्य महती खलूपादेयता विशेषतः संक्षेपेण नाट्यसिद्धान्तपरिज्ञानाय।

---

१. द.रू. १.४

२. तत्रैव १.५

धनञ्जयः स्वपरिचयं स्वतः प्रस्तौति दशरूपकस्य पुष्पिकायां पद्यविशेषण। तद्यथा–

**विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः ।**
**आविष्कृतं मुञ्जमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत्।।**[१]

अर्थाद् विष्णुस्तस्य पितुर्नामासीत् । धनञ्जयोऽयं परमारवंशीयमुञ्जनृपतेः सभापण्डित आसीत्। मुञ्जनृपतेः शासनकालं ख्रष्टीयसंवत्सरस्य ९७४ तः ९९४ ई० यावत् स्वीकुर्वन्ति ऐतिह्यविदः। अत एवायमेव कालो धनञ्जयस्यापि कार्यकालत्वेनाङ्गीकार्यः।

धनिकस्तु धनञ्जयस्यैव कनिष्ठभ्राता। मुञ्जनृपतेः शासनकाले यदा धनञ्जयो राज्यसभापण्डित आसीत् तदायं तत्रैवासीन्महासाध्यपालपदवीमारूढः। अनेन खलु मुञ्जोत्तराधिकारिसिन्धुराजस्य शासनकाले (९९४ तः १०४० ई०) दशरूपकस्यावलोकाख्या व्याख्या कृता। यद्यपि बहुविधाभिष्टीकाभि-ष्टीकितोस्ति दशरूपकग्रन्थः, किन्तु तस्यावलोकटीका काचिद्विशिष्टैव। निश्चितरूपेण टीकेयं मूलमप्यतिशेते। अत एव मूलग्रन्थकर्त्रा धनञ्जयेन सहैव धनिकनामोल्लेखस्यास्ति महती परम्परा साहित्यशास्त्रस्येतिहासे। अवलोकस्यावलोकनेन ज्ञायते यद् धनिकेन कश्चित् काव्यनिर्णयाख्यः स्वतन्त्रोपि ग्रन्थः प्रणीतः। यस्मादत्रावलोके कानिचित्पद्यान्युदाहृतानि सन्ति। दुर्भाग्यव-शादिदानीं नोपलभ्यते स ग्रन्थः। धनिकेन निर्मिताः केचनान्येऽपि श्लोकाः समुदाहृताः सन्त्यत्र यैस्तस्य कवित्वमथ च वैदुषी नितरामस्ति प्रमाणिता।

## तात्पर्यवादः

धनञ्जय-धनिकौ व्यञ्जनाविरोधिनावाचार्यौ। काव्यस्य सारभूतो रसरूपार्थस्तात्पर्यशक्त्या प्रकाशितो वाक्यार्थरूप एव न पुनः व्यङ्ग्यार्थरूप इति तयोः प्रमुखः सिद्धान्तः। दशरूपकस्य चतुर्थप्रकाशे स्थायिभावस्य लक्षणं लक्षयद्भ्यां स्थायिभावानां काव्येन सह कः सम्बन्ध इति जिज्ञासितम्। तत्र

---

१. तत्रैव ४.८६

धनञ्जयाचार्येणाभिहितम्–

**वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया।**
**वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः।।**[१]

कारिकामिमां विवृण्वता धनिकेन प्रोक्तम्– यथा लोकिकवाक्येषु 'गामभ्याज' इत्यादौ श्रूयमाणक्रियेषु क्वचिच्च 'द्वारं द्वारं' पिधेहीत्यश्रूयमाणक्रियेषु स्वशब्दस्योपादानात् अथवानुपादानात् प्रकरणादिवशाद् बुद्धिसन्निवेशिनी क्रियैव कारकोपचिता वाक्यार्थः। तथैव काव्येष्वपि क्वचित् 'प्रीत्यै नवोढा प्रिया' इत्यादौ स्वशब्देन रत्यादिरूपोऽर्थोऽभिधीयते, क्वचिच्च–प्रकरणवशादविना-भावान्नियतविभावानुभावोपस्थापनाद्वारा रतिरूपोऽर्थः स्वशब्देनानुक्तोऽपि भावकचेतसि प्रतीयते। फलतः यत्र रतिरूपमेवार्थं शब्दतः प्रोक्तोऽप्राक्तो वा, उभयत्र रतिरूपस्यार्थस्य वाक्यार्थत्वमेवाभ्युपपन्नम्। रतिरूपमेवार्थं प्रतिपादयि-तुमुपात्तानां विभावादीनां रतिरूप एवार्थे पर्यवसानं स्पष्टमेव। वस्तुतस्तैरेव संस्कारपरम्परया रतिरूपोऽर्थः परं प्रौढिमानीयते। एवञ्च विभावादीनां रतिरूपार्थ-द्योतनार्थमुपादानात् रतिरूपोऽर्थ एव न तु व्यङ्ग्यार्थः।[२]

पदार्थस्यैव वाक्यार्थो न त्वपदार्थस्येति चेन्न, कार्यपर्यवसायि-त्वात्तात्पर्यशक्तेः। अर्थात् यथाभिधाशक्तेः बोध्योऽर्थः अभिधेयार्थः, लक्षणाशक्तेः लक्ष्यार्थः तथैव तात्पर्यशक्तेः वस्तुतात्पर्यभूतार्थः। अतस्तात्पर्यशक्तिः वस्तुतात्पर्यभूतार्थपर्यवसायिनी। नहि व्यङ्ग्यार्थस्य तात्पर्यत्वं नास्तीति वक्तुं युज्यते तस्यानियतसीमारूपत्वात्। तेनोक्तं यत्– '**यावत् कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्।**'[३] शब्दोच्चारणादनन्तरं विवक्षितार्थस्य प्रतीतिं यावत् तात्पर्यस्यैव प्रसारो निर्बाधः अतो वक्तुस्तात्पर्यभूतस्यार्थस्य प्रतीतिं यावत् तात्पर्यशक्तेः प्रवर्तमानत्वात् सर्वोऽप्यर्थस्तात्पर्यार्थरूपो वाक्यार्थ एव।

**भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण।**
**गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण॥**

---

१. द.रू. ४.३७

२. तत्रैव, अवलोकटीका

३. तत्रैव, ४. अवलोकटीका

इत्यत्र निषेधरूपेऽर्थे वस्तुनः तात्पर्यम् अतो तावत् तात्पर्यशक्तेः प्रवृत्तिः। इत्थं सर्वेऽपि सामान्यविशेषार्थाः तात्पर्ये विषयीभूतत्वाद् वाक्यार्थाः।

तथा हि वैदिकं लौकिकञ्च सर्वं वाक्यं कार्यपरं भवति तद्बोधार्थमेव तेषामुपादानात्। प्रयोजनरहितं वाक्यं सर्वथाऽनुपादेयं भवत्युन्मत्तप्रलापवत्। तथैव काव्येऽपि काव्यशब्दानां प्रयोगे किञ्चत्प्रयोजनं भवति। तच्चास्ति निरतिशयसुखास्वादः। काव्यशब्दानामस्मिन्निरतिशयसुखास्वादरूपेऽर्थे पर्यवसानमेव मुख्यं प्रयोजनम्। यतो हि काव्ये रसानुभूतिर्भवेदिति प्रयोजनमुद्दिश्य काव्ये विभावाद्यर्थवाचकाः शब्दाः प्रयुज्यन्ते। अतस्तन्निमित्तेन काव्ये प्रयुक्तानां शब्दानां तात्पर्यभूतोऽर्थः रस एव। काव्ये प्रयुक्ताः शब्दाः प्रथमं विभावाद्यर्थं प्रकटयन्ति तत्परं तात्पर्यभूतं रसरूपं परमानन्दमनुभावयन्ति। एवं काव्ये प्रयुक्तानां शब्दानां प्रथमतया बोधिताः विभावाद्यर्थाः पदार्थस्थानीयाः, अनन्तरञ्च प्रकाशितो रसादिरूपोऽर्थः वाक्यस्थानीयः। शास्त्रेषु संसृष्टाः पदार्थाः यथा वाक्यार्थं जनयन्ति तथैवात्र संसृष्टाः पदार्थस्थानीयाः विभावाद्यर्थाः वाक्यार्थरूपमानन्दं जनयन्ति। एवं पदार्थवाक्यार्थन्यायेन शृङ्गाराद्यर्थस्य वाक्यार्थत्वमुपपन्नं न तु व्यङ्ग्यार्थ-त्वमिति। फलतः तात्पर्यशक्तिरेव रसादिरूपस्य वाक्यार्थस्य बोधिका न काचिदपरा शक्तिस्तत्र कल्पनीयेति पक्षो धनञ्जयधनिकयोः।

एवं रसादेर्वाक्यार्थत्वं न तु व्यङ्ग्यार्थत्वमित्युपसंहरता धनिकेनोक्तं- 'ईदृशे च वाक्यार्थनिरूपणे परिकल्पिताभिधादि- शाक्तिवशेनैव समस्तवाक्यार्था-वगतेः शक्त्यन्तरपरिकल्पनं (निरर्थकः) प्रयासः। यथावोचाम काव्यनिर्णये-[१]

**तात्पर्यान्तरिते वाक्ये व्यञ्जकत्वं न च ध्वनिः।**
**किमुक्तं स्यादश्रुतार्थतात्पर्येऽन्योक्तिरूपिणि।।**

**विषं भक्षय पूर्वोऽयं समौ तत्परतादिषु।**
**प्रसज्यते प्रधानत्वाद् ध्वनित्वं केन वार्यते।।**

**ध्वनिश्चेत्स्वार्थविश्रान्तं वाक्यमर्थान्तराश्रयम्।**
**तत्परत्वं त्वविश्रान्तौ, तन्न विश्रान्त्यसम्भवात्।।**

१. द.रू. ४.३७, अवलोके

**एतावतैव विश्रान्तिस्तात्पर्यस्येति किं कृतम्।**
**यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्।।**

**भ्रम धार्मिक विश्रब्धमिति भ्रमिकृतास्पदम्।**
**निर्व्यापृतिः कथं वाक्यं निषेधमुपसर्पति।।**

**प्रतिपाद्यस्य विश्रान्तिरपेक्षापूरणाद्यदि।**
**वक्तुर्विवक्षिताप्राप्तेरविश्रान्तिर्न वा कथम्।।**

**पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता।**
**वक्त्रभिप्रेततात्पर्यमतः काव्यस्य युज्यते।।**

**धनञ्जय-धनिकाभिमतो भावकत्वव्यापारः–**

धनञ्जयधनिकाभ्यामाचार्याभ्यां रसादीनां व्यङ्ग्यार्थत्वं सर्वथा निषिध्य तेषां भाव्यभावकसम्बन्धेन वाक्यार्थत्वं प्रतिपाद्यते। तत्र तयोः स्पष्टं प्रतिपत्तिर्यत् नास्ति रसादीनां काव्येन सह व्यङ्ग्यव्यञ्जकभावसम्बन्धः। काव्यं हि भावकं भाव्या हि रसादयः। ते हि स्वतो भवन्त एव भावकेषु विशिष्टविभावादिमता काव्येन भाव्यन्ते। एवं तन्मते रसादयश्च भाव्याः। येन काव्येन सह रसादीनां व्यङ्ग्यव्यञ्जकत्वं न प्रत्याख्यातं, भाव्यभावक-सम्बन्धश्चोपपन्नो भवति। भावकत्वव्यापारोऽयं काव्येतरस्थलेषु न विद्यते। इदं काव्यस्यैव वैलक्षण्यं यत् तत्रैवान्वयव्यतिरेकाभ्यां भाव्यभावकलक्षण-सम्बन्धस्यावगमः सिद्ध्यति नान्यत्र। भरतमुनिमप्युद्धरति धनिकः–

**भावाभिनयसम्पन्नान् भावयन्ति रसानिमान्।**
**यस्यात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः॥**

रसनिष्पत्तिप्रक्रियां निरूपयता धनञ्जयेनोक्तं यत्–

**पदार्थैरिन्दु-निर्वेद-रोमाञ्चादिस्वरूपकैः।**
**काव्याद्विभाव-सञ्चार्यनुभावप्रख्यतां गतैः॥**
**भावितः स्वदते स्थायी रसः स परिकीर्तितः।**[१]

१. द. रू. – ४.४६-४७

तत्रैव टीकायामाटीकते धनिकः– 'अतिशयोक्तिरूपकाव्य व्यापाराहितविशेषैश्चन्द्राद्यैरुद्दीपनविभावैः प्रमदाप्रभृतिभिरालम्बनविभावैर्निर्वेदादि- भिर्व्यभिचारिभावैः रोमाञ्चाश्रुभ्रूक्षेपकटाक्षाद्यैरनुभावैरवान्तरव्यापारतया पदार्थीभूतैर्वाक्यार्थः स्थायी भावो विभावितः = भावरूपतामानीतः स्वदते। स रस इति प्राक्प्रकरणे तात्पर्यमिति'। अयमाशयः, अतिशयोक्तिरूपव्या- पारविशेषेण विभावितैर्विभावानुभावव्यभिचारिभावैर्भावितः स्थायी स्वदते। अतिशयोक्तिरूपव्यापारोऽयं तन्निर्दिष्टभावैर्भावितः स्थायी स्वदते। अतिशयोक्तिरूपव्यापार एव यस्य महिम्ना विभावादयः पदार्थस्थानीयाः रसादयश्च वाक्यार्थस्थानीया भवन्ति। भावकत्वव्यापारोऽयं भट्टनायकाभिमत- भावकत्वव्यापाराद् भिद्यते स्वरूपभेदात्।

## रसिकवर्त्ती रत्यादिरेव रसः

भरतस्यायं सिद्धान्तः– विभावानुभावव्याभिचारिपरिवृत्तः स्थायी भावो रसनाम (ताम्) लभते।[१] अर्थात् विभावादिसामग्रीबलात् स्थायी भाव एव रसत्वमाप्नोति। अयं स्थायी कस्य भवति इत्यस्मिन् विषये बहुविधो विचारो विदुषां दृश्यते। धनञ्जयधनिकयोः स्पष्टं मतं तत्र सहृदयस्यैव स्थायी भावो रसतामुपैति। धनञ्जयेनोक्तं दशरूपके–

**रसः स एव स्वाद्यत्वाद्रसिकस्यैव वर्तनात्।**
**नानुकार्यस्य वृत्तत्वात्काव्यस्यातत्परत्वतः॥**

**द्रष्टुः प्रतीतिव्रीडेर्ष्यारागद्वेषप्रसङ्गतः।**
**लौकिकस्य स्वरमणीसंयुक्तस्येव दर्शनात्॥**[२]

अर्थात् तात्पर्यवृत्या समुपस्थापितस्य रसिकस्यैव स्थायिनः रसत्वं सहृदयहृदयवर्तमानत्वात् तस्यैवास्वाद्यत्वाच्च। नहि अनुकार्यस्य स्थायिना रसत्वमाप्नुवन्ति। अवलोके कारिकार्थं विशदयता धनिकेन स्पष्टं प्रत्यपादि यत् काव्यार्थोपप्लावितो रसिकवर्ती रत्यादिः स्थायीभावः। स च

१. ना.शा. ६ गद्यभागे
२. द.रू. – ४.३८–३९

निर्भरानन्दसंविदात्मतामापद्यमानो रसः। रसिकवर्त्ती वर्तमानत्वात् नानुकार्य-रामादिवर्त्ती वृत्तत्वात्तस्य। ननु शब्दोपाधिना अवर्तमानस्यापि वर्तमानवद्भासनं भवति। यथोक्तं च वाक्यपदीये–

**शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।**
**प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते।।**[१]

अर्थादवर्तमाना रामादयः शब्दोपाधिना वर्तमानवत्प्रतिभासन्त इतिचेन्न, तदवभासस्यास्मदादिभिरनुभूयमानत्वादसत्समतैव पुनश्च विभावरूपेण रामादीनां वर्तमानवदवभासनमिष्यते अस्माभिरपि। किन्तु कविभिः कदापि रामाद्यनुकार्याणां रसास्वादनाय काव्यं प्रवर्त्यते अपितु सहृदयानानन्दयितुमित्यपरं प्रमाणमनुकार्यरामादिवर्त्तिनो रत्यादेः रसतां प्रत्यनुपादेयत्वे। यदि रामादेः शृङ्गारः स्यात् ततो नाटकादौ तद्दर्शने लौकिक इव नायके शृङ्गारिणि स्वकान्तासंयुक्ते दृश्यमाने शृङ्गारवानयमिति प्रेक्षकाणां प्रतीतिमात्रं भवेत्, न रसिकानामास्वादः। तथा सति लज्जासूयानुरागापहारेच्छादयः प्रसज्येरन्। अतः लौकिकत्वस्यापसारणायालौकिकत्वरूपाय च रत्यादिभावानां स्थितिः रसिकेष्वेव ज्ञाता न रामादिष्वनुकार्येषु। एते रामादयः अनुकार्यरूपेण लोकसिद्धानां मानवानामवस्थायाः प्रतिपादकाः भवन्ति। यतश्च ते सामाजिकानां हृदये विद्यमानायाः रतेर्विभावनं कुर्वन्त्यतो विभावेति संज्ञां लभन्ते। तत्र रामसीतादिशब्दाः परित्यक्तविशेषाः पुरुषस्त्रीमात्रवाचिनो रसहेतुतां गच्छन्ति। यद्येतेषामनुकार्याणां रत्यादिः रसतां न गच्छति तर्हि काव्ये किमर्थमुपादीयन्त इति चेत्? उच्यते– यथा मृण्मयैः क्रीडकैः क्रीडतां बालानां स्वोत्साहः समास्वाद्यते तथैवानुकार्यैर्विभावितः सामाजिकानामात्मगत एव स्थायी तैरास्वाद्यते। उक्तञ्च तेन–

**धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः।**
**विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते।।**

**ता एव च परित्यक्तविशेषा रसहेतवः।**
**क्रीडतां मृण्मयैर्यद्वद्बालानां द्विरदादिभिः।।**

१. वा.प. ३.७५

**स्वोत्साहः स्वदते तद्वच्छ्रोतॄणामर्जुनादिभिः।**
**काव्यार्थभावनास्वादो नर्तकस्य न वार्यते॥**[१]

तत्र नटस्य जायमानो रसास्वादो न लौकिकः अपितु तस्यापि काव्यार्थभावनया तथैव रसास्वादो यथा सामाजिकानाम्। यद्यपि तत्र केचिद्विप्रतिपद्यन्ते। तन्मते विगलितवेद्यान्तरे रसे नटस्य निमग्नतावशादभिनये त्रुटिः सम्भवा, अतो नटस्य रसास्वादो नैवाङ्गीकार्यः। किन्तु सर्वथा रसास्वादाभावान्नटनं प्रति प्रवृत्तेरभावान्नटेऽपि रसास्वादोऽङ्गीकार्य एव। स च किंमात्रिकः? सर्वथास्ति विचारणीयोऽयं प्रश्नः।

इत्थं धनञ्जयधनिकाभ्यामाचार्याभ्याम् अनुकार्ये विद्यमानस्य स्थायिनो रसत्वमिति भट्टलोल्लटसिद्धान्तं प्रत्याख्याय सहृदयहृदये वर्तमानस्य स्थायिभावस्य रसत्वं सिद्धान्तितम्।

**ध्वनिवादिनां पक्षतस्तात्पर्यवादस्य मीमांसा–**

तात्पर्यशक्त्यैव रसादिरूपार्थस्य प्रतीतिर्न तु व्यञ्जनयेतिसमीक्षणधियो व्यञ्जनावादिनो ब्रुवते–तात्पर्यशब्दस्य किं तात्पर्यम्? यदि व्यङ्ग्यार्थपरत्वमेव तर्हि सिद्धो नः पक्षः। यतो हि वयमपि शब्दादेव व्याङ्ग्यार्थावगतिं मन्यामहे। अस्माकमपि पक्षे विभावादयो रत्यादीन् स्थायिभावानुदबोध यन्तस्तेषामेव रसरूपतामानयन्ति। एवं तात्पर्यशब्दे तच्छब्दो रसादिरूपस्य वाक्यार्थस्य वाचकः तस्मिन्पराः तत्पराः तेषाञ्च भावः तात्पर्यमित्यर्थोऽभिप्रेतो यदि, नास्ति काप्यस्माकं विप्रतिपत्तिः। यतो हि ध्वनिसम्प्रदाये व्यङ्ग्यार्थस्य तात्पर्यत्वमस्ति प्रतिपादितमाचार्यैः। यथोक्तमानन्दवर्धनेन–'यत्त्वभिप्राय-विशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाश्यते तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानम्'। प्रोक्तञ्चाभिनवगुप्तपादाचार्येणापि– 'तात्पर्येण विश्रान्तिधामतया प्रयोजनत्वेनेति यावत्'। इत्थं रसरूपव्यङ्ग्यार्थस्य तात्पर्यवत्वमस्ति प्रतिपादितं ध्वनिवादिभिः। यद्येवंरूपेण तात्पर्यवादिनोऽपि तात्पर्यं तर्हि नास्ति तत्र विवादावसरः। किन्तु तात्पर्यवादी धनिको यदि प्रतीयमानार्थप्रत्ययनार्थं

१. द.रू. ४/४०–४२

तात्पर्यवृत्तिं प्रतिपादयति तदा जायतेऽस्माकं विरोधः। तत्रायमेव प्रश्नः– किमियं तात्पर्यवृत्तिरभिहितान्वयवादिनां मीमांसकानां निकाये वाक्यार्थाव-भासनीत्वेनाङ्गीकृता वृत्तिरथवा तद्भिन्ना काचित्। अभिहितान्वयवादिनां मीमांसकानां गृहे वर्तमाना तात्पर्यवृत्तिर्भवितुं नार्हतीयं पदार्थान्वयबोध मात्रपरिक्षीणत्वात्। तद्भिन्ना यदि काचिदन्या, तस्या व्यञ्जनायामेवान्तर्भावः। अर्थात् यथा वयमभिधातात्पर्य-लक्षणाभ्यो भिन्नत्वेन व्यञ्जनामङ्गीकुर्मस्तथैव धनिकोऽपि अभिधातात्पर्यभिन्नत्वेन कञ्चिद्व्यापारमङ्गीकरोति स एव व्यञ्जनाव्यापारः, भेदस्तु नाम्नि केवलम्। अर्थात् तात्पर्यनाम्ना स व्यञ्जनाव्यापार एव। उक्तञ्च प्रभाकरभट्टरसप्रदीपे– 'तत्र प्रष्टव्यं किमिदं तत्परत्वं, तदर्थत्वं वा, तात्पर्यवृत्त्या तद्बोधकत्वं वा? आद्ये न विवादः। व्यङ्ग्यत्वेऽपि तदर्थतानपायात्। द्वितीये तु केयं तात्पर्याख्या वृत्तिः? अभिहितान्वयवा-दिभिरङ्गीकृता तदन्या वा? आद्ये दत्तमेवोत्तरम्, द्वितीये त्वतिरिक्तवृत्त्यङ्गी-कारान्नाममात्रे विवादे पर्यवसानमिति।

उपर्युक्तपर्यालोचनेन निष्पन्नमिदं यत् धनञ्जयधनिकौ काव्ये व्यङ्ग्यव्यञ्जकभावं प्रत्याख्याय भाव्यभावकसम्बन्धेन रसादेर्वाक्यार्थत्व-मङ्गीकुरुतः। काव्यार्थीभूतस्य रसादेः प्रतिपादनार्थं तात्पर्यवृत्तिरवलम्बितो-भाभ्यामाचार्याभ्याम्। यावद् वक्तुस्तात्पर्यं न प्रतीयते तावत्तत्तात्पर्यविषयीभूतार्थं प्रत्याययितुं प्रसक्ता भवति तात्पर्यवृत्तिः। तन्मते ततः पूर्वं तस्याः प्रशमनस्य प्रश्न एव नास्ति। **'सर्वं वाक्यं कार्यपरं'** भवतीति मीमांसादर्शनस्य सिद्धान्तं योजयित्वा रसास्वादरूपञ्च प्रयोजनं वाक्यस्योद्घोष्य तत्परत्वमेव वाक्यस्य सिद्धान्तयति तात्पर्यवादी। विभावादयः पदस्थानीयाः रत्यादयश्च वाक्यस्थानीया भवन्तीत्युत्प्रेक्ष्य पदार्थवाक्यार्थन्यायेन शृङ्गारादेरर्थस्य वाक्यार्थत्वं प्रतिपादयति। वस्तुतो मीमांसादर्शने कुमारिलभट्टेन पदार्थानां क्रियाकारक-सम्बन्धान्वयप्रत्ययार्थं वाक्यार्थबोधजनिका तात्पर्यवृत्तिः कल्पिता। किन्तु धनञ्जयधनिकाभिमता तात्पर्यवृत्तिरियं न सर्वथा तद्रूपा पदार्थान्वया-तिरिक्तरसादिरूपवाक्यार्थप्रत्यायनगौरवात्। अतः तन्नाम्ना काचिदपरेव या व्यञ्जनावत् कार्यं करोति। नामभेदने व्यञ्जनाङ्गीकृतेत्यपि वक्तुं न युज्यते तस्याः व्यञ्जनावल्लक्षणभेदादिहीनत्वात्।

उभाभ्यामार्चाभ्यां कश्चित्काव्यान्तर्वर्ती भावकत्वव्यापारोऽपि कल्पितः। अतो भाव्यभावकसम्बन्धेन रसादीनां भावनं दृष्ट्वा समीक्षका भट्टनायकस्यात्र प्रभावमनुभवन्ति। वस्तुतो नेदं तथ्यम्। भट्टनायकस्य भावकत्वव्यापारः साधारणीकरणात्मा दशरूपककारस्य न तथा। प्रतीयते यद् भट्टनायकेन धनञ्जयस्य भावकत्वव्यापारेण प्रभावितेन सता साधारणीकरणात्मत्वेन सविशेषं भावकत्वव्यापारः प्रतिपादितः यतो हि 'ता एव च परित्यक्तविशेषा रसहेतवः।' इति पङ्क्तौ स्पष्टतया साधारणीकरणस्य दृश्यते बीजम्। भट्टनायकस्य साधारणीकरणे दशरूपकस्यैव प्रभा प्रतीयते। तत्र प्रमाणम् काव्यप्रकाशे मम्मटभट्टेन रसभुक्तिवादप्रसङ्गे आत्मगतत्वेन रसप्रतीतेर्यत् भट्टनायककृतं खण्डनं 'न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते' इति प्रस्तुतं तत्तु भट्टनायकः परवर्त्ती दशरूपककारात्। साधारणीकरणस्य च पूर्वप्रतिपादकता धनञ्जये प्रतिष्ठिता भवति। एतत्सर्वमानुमानिकमेव भट्टनायकस्य हृदयदर्पणानुपलब्धेः। तस्य जीवनकालोऽपि तथैवानुमानबलादवधारितः।

**आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः।**
**योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादपराङ्मुखाय॥**[१]

इति व्याहरता धनञ्जयेन रसास्वादरूपानन्दप्राप्तिरेव प्रमुखं प्रयोजनं निरधारि, तत्प्रयोजनपरत्वञ्च काव्यस्याङ्गीकृत्य रसादेर्वाक्यार्थत्वं तस्य च तात्पर्यशक्त्यैव परिप्रकाशनमुद्घोषितम्। तथैव तदनुयायिना धनिकेन चोरीकृतम् इति।

**आचार्यकुन्तकः** (९५० ई० तः १०५०ई० अनुमानितः)

साहित्यशास्त्रपरम्परायामाचार्यकुन्तकस्यातिविशिष्टं स्थानं वर्तते। यथा ध्वनि सम्प्रदायप्रवर्तकस्यानन्दवर्धनस्य 'ध्वनिकार' इति नामान्तरं तथैवास्यापि 'वक्रोक्तिकार' इति। वक्रोक्तितिद्धान्तस्यायं प्रवर्तयिता। वक्रोक्तिः काव्यजी-वितमिति तस्य प्रमुखः सिद्धन्तः। काव्यस्य सारभूततया वक्रोक्तिं प्रतिपाद्य 'काव्यस्यात्मा' ध्वनिरिति सिद्धान्तो ध्वनिवादिनां प्रत्याख्यातोऽनेन। तस्मादयमपि

१. द.रू.१.६

ध्वनिर्विरोधिष्वाचार्येषु परिगण्यते। यद्यपि नानेन तथा ध्वनिर्विध्वंसितो यथा महिमभट्टादिना तथापि वक्रोक्तेः काव्यात्मत्वेन प्रतिपादनात् स्वयमेव ध्वनिविरोधः समुपस्थितः।

अद्यावधि कुन्तकाचार्यस्य वक्रोक्तिजीवितमेव केवलमेको ग्रन्थः समुपलभ्यते सोप्यपूर्ण एव। ग्रन्थस्य पुष्पिकाया अभावान्न प्राप्यते तत्र ग्रन्थकर्त्तुः परिचयविषये रचनाकालविषये वा किञ्चत्। ग्रन्थारम्भेऽपि नास्ति कञ्चित्परिचयात्मकं तत्त्वं सुदृढम्। अतोन्तःप्रमाणमेवोरीकृत्य किञ्चिदूह्यते तेषां जीवनविषये।

अयं सविशेषमुद्धरति ध्वन्यालोकं कारिकावृत्तिभागात्मकं सम्पूर्णरूपेण। यथा– 'ननु कैश्चित् प्रतीयमानं वस्तु ललनालावण्यसाम्याल्लावण्य-मित्युपपादितमिति[१]–

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।**

तथा–

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥**

कारिकामिमामुद्धृत्य तद्वृत्तौ समुदाहृतानि 'क्षिप्तो हस्तावलग्न....इत्या-द्युदाहरणान्यालोचितानि तेन। कविराजराजशेखरमप्युदाहरणत्वेनाहरति कुन्तकः स्वग्रन्थे।[२]

**सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी**
**सीता जवात्त्रिचतुराणि पदानि गत्वा।**
**गन्तव्यमद्य कियदित्यसकृद् ब्रुवाणा**
**रामाश्रुणः कृतवती प्रथमावतारम्॥**

१. व.जी. वृत्तौ ८८
२. तत्रैव वृ. ३३

एवमन्यत्रापि–

**तथैव च विचित्रवक्रत्वविजृम्भितं हर्षचरिते प्राचुर्येण भट्टबाणस्य विभाव्यते। भवभूतिराजशेखरविरचितेषु बन्धसौन्दर्यसुभगेषु मुक्तकेषु परिदृश्यते।**

अनयोरानन्दवर्धनराजशेखरयो राजशेखर एवोत्तरवर्त्ती, यतो हि स आनन्दवर्धनमुदाहरति। राजशेखरोयं महीपालस्य गुरुरासीत्। कान्यकुब्ज-नृपतेर्महीपालस्य शासनकालः ईसवीयसंवत्सरस्य ९०७ ई० तः ९१७ई० यावन्निश्चीयते 'सियोडानी'–इति शिलालेखमाधृत्य। अतः स एव कालो राजशेखरस्य स्थितिकालत्वेन सिद्ध्यति। तत्परवर्त्तिनः कुन्तकस्य जीवनकालः ९५०ई० संवत्सरात् पूर्वं भवितुं नार्हति। पुनश्च कुन्तकं नाम्ना निर्दिशति महिमभट्टो व्यक्तिविवेके – तद्यथा–

**काव्यकाञ्चनकषाश्ममानिना कुन्तकेन निजकाव्यलक्ष्मणि।**
**यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो मया॥**[1]

महिमभट्टस्य जीवनसमय ईसवीयसंवत्सरस्य एकादशशताब्द्याः मध्यभागो निश्चीयते। अतः कुन्तकस्य जीवनसमयः ततः पूर्वमेवा-कलयितुमुचितः, तस्मात्कुन्तकाचार्यस्य समयः ९५०ई० तः १०५० ई० यावत् कुत्रचित् भवति।

केचनाचार्याः कुन्तकमभिनवगुप्तपादाचार्यात्पूर्ववर्त्तित्वेनाङ्गीकुर्वन्ति केचिच्चोत्तरवर्त्तित्वेन। विनिगमनाभावात् किमपि तत्र सिद्धान्ततः वक्तुं नोचितम्। कालगणनया उभावाचार्यौ अन्योन्यमविदितौ प्रायः समकालिकौ प्रतीयेते। न कोपि निर्दिशत्यन्यं स्वग्रन्थे। वक्रोक्तिसिद्धान्तस्याभिनवगुप्तपादात्पूर्ववर्त्तिता हास्यास्पदमेव। ध्वनिसम्प्रदायप्रवर्तनाय कृतसङ्कल्पोऽयमाचार्यः काव्यात्मत्वेन प्रतिपादितं विचित्राभिधामूलकं वकोक्तिदर्शनं कथमपि सोढुं न शक्नोति। लोचने अभिनवभारत्यां च ध्वनिविरोधिनो भट्टनायकस्य भर्त्सनेनास्य ध्वनिपक्षे बद्धपक्षपातः सुविदित एव। यदि पूर्ववर्ती कुन्तकस्तर्हि कथमुपेक्षि-

१. व्य. वि. २.२९

तोऽभिनवगुप्तेन। अतोऽयमभिनवगुप्तात् पूर्ववर्तीति वक्तुं न शक्यते।

आचार्यकुन्तकोऽपि काश्मीरकः प्रत्याभिज्ञादर्शनस्य च पण्डित आसीत्। वक्रोक्तिजीवितस्य वृत्त्यारम्भे तेन भगवतः शिवस्य स्वरूपं यद्ववर्णितं तदेनं प्रत्यभिज्ञादर्शनानुयायित्वेन प्रमाणयति। तद्यथा–

**जगत्त्रितयवैचित्र्यचित्रकर्मविधायिनम्।**
**शिवं शक्तिपरिस्पन्दमात्रोपकरणं नुमः॥**[१]

तस्य वक्रोक्तिजीविते सन्ति नैके एवंविधाः सन्दर्भाः यैः तस्य प्रत्यभिज्ञादर्शनानुयायित्वमस्ति प्रमाणितम्। वक्रोक्तिजीविते समागतां द्वितीयां कारिकां समाधृत्य केचन कारिकाभागस्य 'काव्यालङ्कार' इति वृत्तिभागस्य च वकोक्तिजीवितमिति नाम निर्दिशन्ति। सा च कारिका–

**'लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।**
**काव्यस्यायमलङ्कारः कोप्यपूर्वो विधीयते।।** [२]

कथमपि कारिकाया नायमर्थो येन मूलग्रन्थस्य काव्यालङ्कार इति नामनिर्णयो भवेत्। सम्पूर्णोऽयं ग्रन्थः वक्रोक्तिजीवितमिति नाम्ना साहित्यशास्त्र–परम्परायां प्रसिद्धोऽस्ति। प्रायः सर्वे समीक्षकाः कुन्तकमेव वक्रोक्तिकर्त्तृत्वे–नोदाहरन्ति। अतः कारिकावृत्तिभ्यां युक्तस्य सम्पूर्णग्रन्थस्यैव नाम वक्रोक्ति–जीवितमिति निष्पद्यते।'

**काव्यस्वरूपविमर्शः**

काव्यस्य स्वालक्षण्यं किमिति वक्तुमुद्यमानः कुन्तकः प्रथमं काव्यस्य प्रयोजनं ब्रूते। तन्मते तुल्यप्रयोजनेभ्यः शास्त्रेभ्यः काव्यं भिद्यते भिन्नस्वरूपात्। काव्यबन्धोऽयं क्लेशभीरूणां धर्माद्युपेयार्थिनां विजगीषूणां राजपुत्रादीनां व्युत्पत्तये सहृदयहृदयहारिक्रमेणोदितः व्यतीतसच्चरितराजचरितनिदर्शको भवति। महतां हि राजादीनां व्यवहारे वर्ण्यमाने तदङ्गभूताः सर्वे मुख्यामात्यप्रभृतयः समुचि–

१. व.जी. १.१ वृत्तौ
२. तत्रैव. २

प्रातिस्विककर्तव्यव्यवहारनिपुणतया निबद्ध्यमानाः सकलव्यवहारिवृत्तोपदेशतामापद्यन्ते। ततः सर्वः क्वचित्कमनीयकाव्ये कृतश्रमः समासादितव्यवहारपरिस्पन्दसौन्दर्यातिशयः श्लाघनीयफलभाग् प्रसिद्धः सोप्यस्य काव्यामृतचर्वणाचमत्कारकलामात्रस्य न कामपि साम्यकलनां कर्त्तुमर्हति। दुःश्रवदुर्भणदुरधिगमत्वादिदोषदुष्टोध्ययनावसर एव दुःसहदुःखदायी शास्त्रसन्दर्भः तत्कालकल्पितकमनीयचमत्कृतेः काव्यस्य न कथञ्चिदपि स्पर्धामधिरोहति। अतः चतुर्वर्गफलप्राप्तिः, व्यवहारज्ञानम् आनन्दानुभवश्च मुख्यतः प्रयोजनानि काव्यस्य। चेतश्चमत्काररूपं प्रयोजनमेव मौलिभूतमिति प्रतीयतेऽसंशयम्। उक्तञ्च तेन–

**धर्मादिसाधनोपायः सुकुमारक्रमोदितः।**
**काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः॥**

**व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः।**
**सत्काव्याधिगमादेव नूतनौचित्यमाप्यते॥**

**चतुवर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।**
**काव्यामृतरसेनान्तश्चमत्कारो वितन्यते॥**[1]

**कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्।**
**आह्लाद्यमृतवत्काव्यमविवेकगदापहम् ॥**

**आयात्यां च तदात्वे च रसनिस्पन्दसुन्दरम्।**
**येन सम्पद्यते काव्यं तदिदानीं विचार्यते॥**[2]

सालङ्कारस्य काव्यतेति ब्रुवाणः कुन्तकः विशिनष्टि काव्यमलङ्कारयोगात्। तेनोक्तं यत् काव्येऽलङ्कार्याणाञ्च पृथग्ग्रहणमपोद्धारबुद्ध्या क्रियते अन्यथा काव्येऽलङ्कारालङ्कार्ययोः पार्थक्येन प्रतिपादनं न युज्यते। अलङ्कृतानामेव शब्दार्थानां योगात् काव्यमुपपद्यते। तद्यथा–

---

१. व. जी. १/३,४,५

२. व.जी. १.७,८ वृत्तौ

**अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।**
**तदुपायतया तत्त्वं सालङ्कारस्य काव्यता॥**[१]

वृत्तौ पुनः–

**'सालङ्कारस्यालङ्करणसहितस्य सकलस्य निरस्तावयवस्य सतः समुदायस्य काव्यता कविकर्मत्वम्। तेनालङ्कृतस्य काव्यत्वमिति स्थितिः, न पुनः काव्यस्यालङ्कारयोग इति'।** काव्येऽलङ्कारस्यानिवार्यत्वं प्रतिपाद्य तेन परामृष्टं विशिष्टं काव्यलक्षणम्। तद्यथा–

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥**[२]

लक्षणेऽस्मिन् पञ्चपदानि सविशेषमुपात्तानि सन्ति– (१) शब्दार्थौ (२) सहितौ (३) वक्रकविव्यापारशालिनि (४) बन्धेः (५) तद्विदाह्लाद-कारिणि।

काव्यलक्ष्मविधायिषु केचन रमणीयताविशिष्टस्य शब्दस्य काव्यत्वं प्रतिपादयन्ति, अन्ये च चारुताविशिष्टार्थस्य। किन्तु कुन्तको भामहवत् शब्दार्थयोः साहित्यवादी, तेनोक्तं यत् 'शब्दार्थौ काव्यं वाचको वाच्यश्चेति द्वौ सम्मिलितौ काव्यम्। द्वावेकमिति विचित्रैवोक्तिः। तेन यत्केषाञ्चिद्वाच्यमेव रचनावैचित्र्य-चमत्कारकारि काव्यमिति, पक्षद्वयमपि निरस्तं भवति। तत्र तेन भामहस्य परम्परा प्रमाणत्वेनोपस्थापिता–

**रूपकादिरलङ्कारस्तथान्यैर्बहुधोदितः ।**
**न कान्तमपि निर्भूषं विभाति वनितानन्म्॥**

**रूपकादिरलङ्कारं बाह्यमाचक्षते परे।**
**सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्॥**

---

१. व.जी. १.६

२. तत्रैव १

**तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।**
**शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः॥**

शब्दार्थयोः स्वरूपं विचारयता तेनोक्तं यच्छात्रेषु वाचकत्वनियमेन शब्दत्वसिद्धिः वाच्यत्वनियमेन चार्थस्य सिद्धिः किन्तु काव्यमार्गे कश्चिद् विवक्षितार्थैकवाचकः। अर्थोऽपि तादृश एव यः सहृदयहृदयाह्लादकारिस्वस्पन्दसुन्दरो भवति। प्रोक्तञ्च तेन–

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।**
**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥**[1]

**यथा–**

**द्वयं गतं सम्प्रति शोचनीयतां**
**समागमप्रार्थनया कपालिनः।**
**कला च सा कान्तिमती कलावत-**
**स्त्वमस्य लोकस्य च नेत्रकौमुदी॥**[2]

इत्यत्र परश्मेवरवाचकशब्दसहस्रसम्भवेऽपि 'कपालिन' इति बीभत्सरसालम्बनविभाववाचकः शब्दो जुगुप्सास्पदत्वेन प्रयुज्यमानः कामपि वाचकवक्रतां विदधाति।'सम्प्रति' द्वयं चेत्यतीव रमणीयम् –यत् किल पूर्वमेका सैव दुर्व्यसनदूषितत्वेन शोचनीया संजाता, सम्प्रति पुनस्त्वया तस्यास्तथाविध-दुरध्यवसायसहायकमिवारब्धमित्यत्युपहस्यते।'प्रार्थना' शब्दोप्यतितरां रमणीयः, यस्मात् काकतालीययोगेन तत्समागमः कदाचिन्न वाच्यतावहः। प्रार्थना पुनरत्रात्यन्तं कौलीनकलङ्ककारिणी।'सा च' 'त्वं च' इति द्वयोरप्यनुभूयमान-परस्परस्पर्धिलावण्यातिशयप्रतिपादनपरत्वेनोपात्तम्। 'कलावतः' 'कान्तिमती' इति च मत्वर्थीयप्रत्ययेन द्वयोरपि प्रशंसा प्रतीयत इत्येतेषां प्रत्येकं कश्चिदप्यर्थः शब्दान्तराभिधेयतां नोत्सहते। कविविवक्षितविशेषाभिधानक्षमत्वमेव वाचकत्वलक्षणम्। यस्मात्प्रतिभायां तत्कालोल्लिखितेन केनचित्परिस्पन्देन

१. व.जी. १.९
२. तत्रैव १. वृत्तौ

परिस्फुरन्त:पदार्था: प्रकृतप्रस्तावसमुचितेन केनचिदुत्कर्षेण वा समाच्छादित-स्वभावा: सन्तो विवक्षा विधेयत्वेनाभिधेयतापदवीमवतरन्तस्तथाविधविशेष-प्रतिपादनसमर्थेनाभिधानेनाभिधीयमानाश्चेतनचमत्कारितामापद्यन्ते। अर्थो यथा[१]–

**तामभ्यगच्छद्रुदितानुसारी मुनिः कुशेध्माहरणाय यातः।**
**निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः॥**

अत्र कोऽसौ मुनिर्वाल्मीकिरिति पर्यायपदमात्रे वक्तव्ये परमकारुणि-कस्य निषादनिर्भिन्नशकुनिसंदर्शनमात्रसमुत्थित: शोक: श्लोकत्वमभजत यस्येति तस्य तदवस्थजनकराजपुत्रीदर्शनविवशवृत्तेरन्त:करणपरिस्पन्द: करुणरसपरि-पोषाङ्गतया सहृदयहृदयाह्लादकारी कवेरभिप्रेत:।

इत्थं काव्ये शब्दार्थयो: प्रसिद्धस्वरूपातिरिक्तमन्यदेव वैचित्र्यवैशिष्ट्यं स्वरूपं काव्योपयोगि भवति। एतौ द्वावपि शब्दार्थौ अलङ्कार्यौ भवत:, अनयोरलङ्कृतिस्त्वेकैव सा च वैदग्ध्यभङ्गीभणितिस्वरूपा वक्रोक्तिरेव। उक्तञ्च तेन–

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥**[२]

अर्थाद् वक्रोक्ति: प्रसिद्धाभिधानव्यतिरेकिणी विचित्राभिधैवालङ्कृति-र्यया द्वावपि शब्दार्थावलङ्क्रियेते। एवंविधयो: शब्दार्थयो: परस्परं साहित्ये सति चेतश्चमत्कारकारि काव्यं संजायते।

शब्दार्थयो: साहित्यं तु सर्वशास्त्रप्रसिद्धमेव वाच्यवाचकसम्बन्धस्य विद्यमानत्वात् किन्तु, काव्ये विशिष्टमेव साहित्यमभिप्रेतमस्ति। तत्तु वक्रताविचित्रगुणलङ्कारसंपदां परस्परस्पर्धाधिरोहस्तन्मते। उभयोरप्येकतरस्य साहित्यविरहोऽन्यतरस्यापि पर्यवस्यति। तथा चार्थ: समर्थवाचकासद्भावे स्वात्मना स्फुरन्नपि मृतकल्प एवावतिष्ठते। शब्दोऽपि वाक्योपयोगिवाच्यासम्भवे वाच्यान्तरवाचक: सन् वाक्यस्य व्याधिभूत: प्रतिभाति। उक्तञ्च तेन–

१. व. जी. १.वृ.३१
२. तत्रैव १.१०

**साहित्यमयोः शोभाशालितां प्रति काप्यसौ।**
**अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः ॥**[1]

सहितयोर्भावः साहित्यम्। अनयोः शब्दार्थयोर्या काप्यलौकिकी चेतनचमत्कारकारितायाः कारणम् अवस्थितिविचित्रैव विन्यासभङ्गी। कीदृशी- अन्यूनानतिरिक्तत्वमनोहारिणी परस्परस्पर्धित्वरमणीया। यस्यां द्वयोरकतरस्यापि न्यूनत्वं निकर्षो न विद्यते नाप्यतिरिक्तत्वमुत्कर्षो वास्तीत्यर्थः। ...तस्मादेतयोः शब्दार्थयोर्यथास्वं यस्यां स्वसम्पत्सामग्रीसमुदायः सहृदयाहलादकारी परस्परस्पर्धया परिस्फुरति, सा काचिदेव विन्याससम्पत् साहित्यव्यपदेशभाग् भवति। उक्तञ्च तेन वृत्तौ-

**मार्गानुगुण्यसुभगो माधुर्यादिगुणोदयः।**
**अलङ्करणविन्यासो वक्रतातिशयान्वितः॥**

**वृत्त्यौचित्यमनोहारि रसानां परिपोषणम्।**
**स्पर्धयाविद्यते यत्र यथास्वमुभयोरपि॥**

**सा काप्यवस्थितिस्तद्विदानन्दस्पन्दसुन्दरा।**
**पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते॥**[2]

इत्थं कुन्तकेन काव्यलक्षणं परामृश्य तदङ्गत्वेन शब्दार्थयोः स्वरूपं तयोश्च साहित्यं प्रकृष्टेन पाण्डित्येन महता च श्रमेण प्रतिपादितम्।

## वक्रोक्तिसिद्धान्तस्य मीमांसा

वक्रोक्तिकारः कुन्तकः कविप्रतिभानिर्वर्त्यमुक्तिवैचित्र्यमेव काव्यस्य सारभूतं तत्त्वमिति प्रतिजानीते। तन्मते काव्ये वक्रकविव्यापारस्यैव महिमा। यद्वशात् काव्यस्य वैलक्षण्यं शास्त्रादिभ्यः प्रादुर्भवति। तेनोक्तं यथा प्राणैर्विना शरीरं यथा च स्पन्दैर्विना प्राणास्तथैव यद्विना विपश्चितां वाक्यं निर्जीवतां गच्छति तत्तत्वं वक्रोक्तिर्नाम॥

---

१. व. जी. १.वृ.१७

२. तत्रैव, वृत्तौ ३४-३५

**शरीरं जीवितेनेव स्फुरितेनेव जीवितम्।**
**विना निर्जीवतां येन वाक्यं याति विपश्चिताम्॥[१]**

अतो वक्रत्वव्यापारयुक्तौ शब्दार्थौ सहृदयहृदयाह्लादकरौ काव्यं कर्त्तुं क्षमेते। यत्र च कविप्रतिभादारिद्र्यदैन्यान्नोक्तेश्चमत्कारः कश्चित् समुल्लसति तत्र न जायते तद्विदामाह्लादक्षमता काचिदपूर्वा, यथा मुनिभिः प्रणीतानि बहुविधसम्बोधनसंयुक्तानि स्तोत्राणि। 'गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।' इत्यादीनि कविप्रतिभादैन्याद् वक्रत्वरहितानि सामान्यवार्ताकथनपराणि वाक्यानि न कदापि काव्यत्वेन सचेतसां हृदयमनुरञ्जयितुं समर्थानि। प्रत्युत प्रतिभासमानं विदग्धकविवक्रव्यापारोपारूढं वस्तु शाणोल्लीढमनोहरतया तद्विदाह्लादकारिकाव्यत्वपदवीमधिरोहति।

वक्रकविव्यापारेण वाक्येन जायमानश्चमत्कारातिशयः निरन्तरकाव्याभ्यासवशाद् मसृणीकृतान्तः करणैःसहृदयैरेवानुभूयते न तु सर्वैः। समानार्थप्रतिपादनेऽपि कुत्रचित् कविप्रतिभासंस्पर्शाद् वक्रव्यापारजनितं वैचित्र्यमन्यत्र तदभावे वैचित्र्याभावः सुस्पस्टमेव प्रतिभासते सहृदयानां तद्विदाम्।

परस्परस्पर्धिन्योः शब्दार्थयोः साहित्यभावेनावस्थानात् वक्रत्वमहिम्नैव काव्ये सा शोभा जायते, न केवलं शब्देन नापि च केवलमर्थेन कश्चिच्चमत्कारोपितु शब्दार्थयोः परस्परस्पर्धित्वेन यत् साहित्यं तेनैव काव्यत्वप्रसक्तिः।

यथा[२]–

**ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।**
**दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्।**

अत्र चन्द्रस्य सुरतसुखपरिम्लानेन कामिनीकपोलेन सह यदौपम्यं तत्कविप्रतिभाप्रतिभासमानमर्थसौन्दर्यं तथा ककारादीनां वर्णानामनुप्रासयोजनया जायमानं शब्दचारुत्वम्। अनयोर्द्वयोः शब्दार्थयोः परस्परस्पर्धित्वेन समुत्पन्नसाहित्यभावात्काचिदपरैव विच्छित्तिरत्र काव्ये समास्वाद्यते सहृदयैः।

---

१. व.जी. वृत्तौ ३९
२. तत्रैव, वृ. १९

अनया रीत्या कुन्तकेन परस्परस्पर्धिशीलयोः शब्दार्थयोः साहित्ये कविवक्रव्यापारवशाज्जायमानं वैचित्र्यमेव काव्यस्य परमं तत्त्वमुद्घोषयति। अर्थात् काव्यस्यानुप्राणकं यत्किमपि वैचित्र्यं सहृदयैरनुभूयते तत्सर्वं वक्रकविव्यापारविजृम्भितमेव।

वक्रोक्तेरस्याः प्रथमप्रवर्तकत्वेनाचार्यभामहोस्ति सुतरां प्रसिद्धः साहित्य-शास्त्रपरम्परायाम्। वक्रोक्तेर्माहात्म्यमुद्घाटयता भामहेनोक्तं काव्यालङ्कारे-

**न नितान्तादिमात्रेण जायते चारुता गिराम्।**
**वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः॥**[१]

**तथा-**

**सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां, कविना कार्यः कोऽलङ्कारोऽनया विना॥**[२]

एवं भामहवक्रोक्तिदर्शनस्य प्रेरणास्रोत्र इति वक्तुं शक्यम्। काव्यादर्शकारेण दण्डिना तच्च टीकाकर्त्रा रत्नश्रीज्ञानेनातिशयोक्तिनाम्ना वक्रोक्तेरेव महत्त्वं प्रतिपादितम्। ताभ्यामप्यतिशयोक्तिहीनस्यालङ्कारत्वं नाङ्गीकृतं यथा भामहेन वक्रोक्तिहीनस्य। दण्डिभामहयोर्व्याख्याने विशेषस्त्वयमेव यद् दण्डी स्वभावोक्तिं वक्रोक्तेर्भिन्नां स्वीकरोति भामहस्तु स्वभावोक्तिमपि वक्रोक्तावान्ता-र्भावयति। अन्यथा, एकत्र वक्रोक्तेः सर्वालङ्कारक्रियाशीलताऽपरत्र चातिशयोक्तेः। वामनाचार्येण 'सादृश्याल्लक्षणा वक्रोक्ति' रीति व्याहरता तस्या अमुख्यार्थप्रसवत्वं प्रतिपादितम् । नूनं तेन वक्रोक्तेः स्वरूपं सङ्कोचितम्। वामनाचार्यविचारे नेयं सर्वालङ्कारजननी प्रत्युत अलङ्कारविशेष एव। तदुत्तरवर्त्तिना रुद्रटाचार्येण तु वक्रोक्तिरलङ्कारविशेष एवेतिकृत्वा सा द्विधा विभक्ता- (१) काकुवक्रोक्तिः (२) श्लेषवक्रोक्तिश्च। ततः सर्वैरालङ्कारिकैः प्रायो वक्रोक्तिरलङ्कारविशेष-दृष्ट्यैव प्रतिपादिता कुन्तकमापास्य। अयमस्ति संक्षपतो वकोक्तेर्यात्राक्रमः। एवं भामहाचार्येणाविर्भाविता सर्वालङ्कारप्रसवनपण्डिता वक्रोक्तिः

१. काव्याल०, भामहः, १.३६
२. तत्रैव, २.८५

परवर्त्तिभिरालङ्कारिकैरलङ्कारविशेषरूपे पर्य्यवसिता सङ्कोचिता च। केवलं कुन्तकेनेयं सर्वप्रमुखे पदे पुनः प्रतिष्ठापिता येन वक्रोक्तिप्रस्थानस्य प्रवर्तना जाता। अतः वक्रोक्तेः समुल्लेखो यद्यपि पूर्ववर्त्तिनि साहित्येऽपि प्राप्यते किन्तु प्रस्थानरूपेण तस्याः प्रस्थापना सर्वप्रथमं कुन्तकाचार्येणैव स्वकीये वक्रोक्तिजीविते ग्रन्थे कृता। असंशयं तेन भामहात् प्रेरणाऽधिगता। यथा भामहेन वक्रोक्तिशून्यानां सूक्ष्मलेशादीनामलङ्काराणां खण्डनं कृतं तथैव कुन्तकेनापि उक्तिवैचित्र्याभावे अकाव्यत्वमुद्घोषितम्।

भामहे–

**हेतुः सूक्ष्मोऽथ लेशश्च नालङ्कारतयामतः।**
**समुदायाभिधानस्य वक्रोक्त्यनभिधानतः।।**[1]

कुन्तेके तथा–

**वस्तुमात्रञ्च शोभातिशयशून्यं न काव्यव्यपदेशमर्हति।**[2]

अतो निर्विवादमिदं तथ्यं यत् सहितयोः शब्दार्थयोः काव्यत्व-मङ्गीकुर्वता कुन्तकेन प्रथमतया भामहप्रदर्शितं वक्रोक्तिरूपं काव्यतत्त्वमेव स्वकीये वक्रोक्तिजीवितग्रन्थे व्यापकरूपेण प्रपञ्चितम्। तेन वक्रोक्तेः षड्भेदान् संप्रदर्श्याखिलं काव्यचारुत्वं वक्रोक्तिगतमेव व्यवस्थापितम्। वक्रोक्त्या काव्याचारुत्वं समुदपदिशन् स ध्वनिप्राधान्यं प्रत्यवतिष्ठते।

**आचार्यकुन्तकेन सम्प्रदर्शिता वक्राक्तेः षड्भेदाः–**

(१) वर्णविन्यासवक्रता

(२) पदपूर्वार्धवक्रता

(३) पदपरार्धवक्रता (प्रत्ययवक्रता)

(४) वाक्यवक्रता

---

१. काव्याल.

२. व. जी.

(५) प्रकरणवक्रता

(६) प्रबन्धवक्रता

**वक्रोक्तिः विचित्रैवाभिधा-**

कुन्तकः काव्ये वक्रोक्तेः प्रामुख्यं समुपदिशति येन ध्वनेरात्मत्वं विप्रतिपन्नं भवति। न हि कण्ठतो वक्रोक्तिकारो ध्वनिं दूषयति। किन्तु वक्रोक्तौ विचित्राभिधायाः प्राधान्येनाङ्गीकारात् स्वयमेव व्यञ्जना विप्रतिपन्ना भवति। अभिधातिरिक्तो नान्यः शब्दव्यापारः तेन स्वीकृतः। वक्रोक्तिं निरूपयता तेन प्रोक्तं यत्-'काऽसौ ? वक्रोक्तिरेव। वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचत्रैवाभिधा कीदृशी वैदग्ध्यभङ्गीभणितिः। वैदग्ध्यं विदग्धभावः, कविकर्म-कौशलं तस्य भःङ्गी विच्छित्तिस्तया भणितिः। विचित्रैवाभिधा वक्रोक्तिरुच्यते।' अनेन खलु प्रतीयते यत् कुन्तकस्य अभिधा न सामान्यतो वाच्यार्थमात्रप्रकाशिनी अपितु विचित्रेवाभिधा। वैचित्र्यञ्चास्या अलौकिकत्वात्। लोके प्रयुक्ताः शब्दा न तादृशीं काञ्चिच्चमत्कृतिं जनयन्ति कविवक्रव्यापारविरहात्। कविकर्म-कौशलमहिम्ना वक्रव्यापारसमायुक्ताऽभिधा विचित्रैव भवति। यया काव्ये परमचारुत्वं जायते। अस्यां विचित्राभिधायां कुन्तकेन लक्षणव्यञ्जनेऽप्यन्तर्भाविते। उक्तञ्च तेन-'ननु च द्योतकव्यञ्जकावपि शब्दौ सम्भवतः, तदसंग्रहान्नाव्याप्तिः यस्मादर्थप्रतीतिकारित्वसामान्यादुपचाराद् उपचारात्तावपि वाचकावेव। एवं द्योत्यव्यङ्ग्ययोरर्थयोरपि प्रत्येयत्वसामान्यादुपचाराद् वाच्यत्वमेव।' अर्थाद् यथा प्रत्येयत्वं वाचकस्य धर्मस्तथैव व्यञ्जकस्यापि। एवं प्रत्येयत्वसामान्येन व्यङ्ग्यार्थोऽपि वाच्य एव। अत एव प्रतीतिकारित्वप्रत्येयत्वसामान्योपचाराद् व्यङ्ग्यव्यञ्जकयोः शब्दार्थयोर्वाच्यवाचकरूपेणाभिधानमुपपद्यते। अतः कुन्तकदिशाा व्यङ्ग्यव्यञ्जकयोः शब्दार्थयोर्वाच्यवाचकशब्दार्थयोर्व्यापकं स्वरूपम्। तथैव विचित्राभिधायाः स्वरूपमपि व्यापकं, नास्ति व्यञ्जना काचित्तदतिरिक्ता। अर्थात् यथा द्योत्यद्योतकयोः शब्दार्थयोः वाच्यवाचकावि-त्यभिधानं तथैव व्यञ्जनाप्यभिधैवार्थप्रत्यायनतुल्यत्वात्। अनेन निष्पन्नमिदं यत् कुन्तकदर्शनेऽभिधातिरिक्तः कश्चिदन्यः शब्दव्यापारो नास्तीति।

**ध्वनिवादिनां दृष्ट्या वक्रोक्तिः-**

कुन्तकाचार्यमतेन काव्ये यत्किमपि हृदयाह्लादं स्वस्पन्दसुन्दरं तत्सर्वं वक्रोक्तिविजृम्भितमेव। तेन वक्रोक्तिः विचित्राभिधारूपेण काव्ये प्रतिष्ठापिता यस्यां लक्षणाव्यञ्जनेऽप्यन्तर्भाविते। तन्मते विचित्राभिधारूपिणी वक्रोक्तिरेव केवलं निखिलं वस्तु काव्ये। पर्यालोचनेन प्रतीयते यत् ध्वनिवादिनां सर्वस्वभूतो व्यञ्जनाव्यापारोपि वक्रोक्तिप्रस्थाने सर्वथा नोपेक्षितुं शक्यः। अवश्यमेव कुन्तकेन विचित्राभिधायाः स्वरूपनिर्धारणे व्यञ्जनाव्यापारस्वरूपमेवाधारत्वेनादृतः। तेनाभिधायाः यद् वैचित्र्यं प्रत्यपादि तत्सर्वं न सामान्यशब्दार्थयोः सद्भावात् एतत् तथैव यथा ध्वनिवादिभिर्वाच्यावाचकभावमुपसर्जनीकृत्य व्यङ्ग्य-व्यञ्जकभावात् शब्दार्थयोरसाधारणत्वं विहितम्। अर्थादुभयत्र ध्वनिसम्प्रदाये वक्रोक्तिसम्प्रदाये च साधारणशब्दार्थयोस्तिरस्कृत्याप्रसिद्धशब्दार्थातिरिक्तौ शब्दार्थौ विवक्षितार्थसमर्पणेन काव्ये परां शोभां जनयतः। एवं कुन्तकेन शब्दस्य यद् वैचित्र्यमुपदिष्टं तत् सर्वं ध्वनिवादिनां व्यञ्जकशब्दस्यानुरूपमेव। ध्वनिसम्प्रदाये यथा विवक्षितार्थव्यञ्जकाः शब्दविशेषा एव प्रतिपादितास्तथैव वक्रोक्तिसम्प्रदाये विवक्षितार्थबोधसमर्था एव शब्दाः काव्ये ग्राह्या भवन्ति न सर्वे। एवं द्वयोरपि सिद्धान्तयोः साधारणवाच्यवाचकभावस्य परित्यागो भवति। किन्त्वेकत्र वक्रोक्त्या चमत्कारोऽङ्गीक्रियते अन्यत्र ध्वनिना। अर्थात् कुन्तकस्य वक्रत्वेन शब्दार्थयोः-काव्यचारुत्वकारित्वमभिप्रेतम् आनन्दवर्धनस्य तु व्यञ्जकत्वेन। किन्तु प्रसद्धिवाच्यवाचकभावस्योभयत्र समानभावेन परित्यागः। यथा-

**द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥**

इत्यत्र 'कपालिन' इति पदस्य काव्यचारुत्वं महादेवस्य स्वरूपात्म-कार्थव्यञ्जनादेव। महादेवार्थवाचकशब्दसहस्रसम्भवेऽपि 'कपालिन' इत्यस्यैव पदस्य व्यञ्जनात् शोभितिशयः काव्यस्य न तथा पिनाक्यादीनां पदानाम्। तत्र कारणं पिनाक्यादीनां प्रयोगे पार्वत्या भगवति महादेवे जुगुप्सोदयरूप-कविविवक्षितार्थस्य ध्वननाभावात्। अतः महादेवो वरत्वेन कथमपि न योग्य इत्यमुमर्थं यथा कपालीति पदं व्यञ्जयति न तथा पिनाक्यादिपर्यायवाचिपदम्।

अत एव कविविवक्षितप्रतीयमानार्थ–ध्वननादत्र व्यञ्जकत्वं ध्वनिवादिभि–रुद्घोष्यते। तथैव कविविवक्षितार्थबोधकत्वात् कपालीति–पदस्य वाचकवक्रतेति कुन्तकेनाङ्गीकृतम्।

अतः कुन्तकेन शब्दस्य प्रसिद्धार्थव्यतिरिक्तत्वेन यद्विवक्षितार्थबोध–कत्वमुपदिष्टं तत्तु व्यञ्जकशब्दतुल्यमेव। अत एवं वक्तुं शक्यते यद् विशिष्टशब्दार्थव्याजेन कुन्तकस्य विशिष्टार्थप्रत्ययात्मकं ध्वनिस्वरूपमेवा–भिमतम्। अर्थाद् विचित्राभिधानाम्ना व्यञ्जनैवाङ्गीकृता कुन्तकेन।

एकावलीकारविद्याधरादीनां 'कुन्तकेन भक्तावन्तर्भावितो ध्वनिरिति पक्षः सर्वथाऽनुचित एव। वस्तुतः सूक्ष्मसमीक्षणेन वक्रोक्तिजीवितस्य कुत्रापि भक्तौ ध्वनेरन्तर्भावो नावसीयते स्पष्टतः। कुन्तकेनोपचारवक्रतायां समावेशितोऽविवक्षितवाच्यध्वनिः न तु सर्वो ध्वनिः। कुन्तकेन ध्वनेः सर्वेऽपि प्रकारा वक्रताया विविधेषु भेदेषु समावेशिता न तु केवलमुपचारवक्रतायामेव। तथा सति तस्य मार्गानुयायित्वमुपपद्येत। कुन्तकस्तु स्वयमेव प्रतीयमानार्थभावं प्रतिपद्यते। प्रोक्तञ्च तेन–

**प्रतीयमानता यत्र वाक्यार्थस्य निबध्यते।**
**वाच्यवाचकवृत्तिभ्यां व्यतिरिक्तस्य कस्यचित्।।**[१]

वस्त्वलङ्काररसरूपस्त्रिविधो ध्वनिः कुन्तकाभिमत एव। वस्तुवक्रता–व्याख्यानावसरे तेन वस्तुरूपिणोऽर्थस्य व्यङ्ग्यत्वेनापि ध्वननं प्रोक्तम् — 'वक्रशब्दैकगोचरत्वेन–वक्रो योऽसौ नानाविधवक्रताविशिष्टः शब्दः कश्चिदेव वाचकविशेषो विवक्षितार्थसमर्पणसमर्थः, तस्यैकस्य केवलस्य गोचरत्वेन प्रतिपाद्यतया विषयत्वेनेति। वाच्यत्वेन नोक्तम्,व्यङ्ग्यत्वेनापि प्रतिपादन–सम्भवात्।' ध्वनिकारेण यथा रसस्यालङ्कारतां विप्रतिपद्य तस्य स्वशब्दावाच्यत्वं प्रदर्शितं तथैव कुन्तकेनापि–

**अलङ्कारो न रसवत् परस्याप्रतिभासनात्।**
**स्वरूपादतिरिक्तस्य शब्दार्थासङ्गतेरपि।।**

१. व.जी. वृत्तौ ४०

कुन्तकेन रसस्यालङ्कारता प्रत्याख्याता तथापि तेन रसस्य प्राधान्यं नाङ्गीकृतमपितु वक्रोक्तावन्तर्भावितम्। वक्रोक्ति-सिद्धान्ते रसस्य प्राधान्याभावेऽपि तस्य चमत्कारे नास्ति काऽपि क्षतिः। उक्तञ्च कुन्तकेन-

**निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः।**
**गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः।।**

इत्थं वक्रोक्तिजीवितग्रन्थस्य सूक्ष्मसमीक्षणेन निष्पद्यते यत् वक्रोक्तिमूलकं कुन्तकदर्शनं न ध्वनिविरोधि। कुन्तकस्य वक्रोक्तिसिद्धान्तः ध्वनिसिद्धान्तमेवाधारीकृत्य प्रवर्तितः प्रतीयते। वचनकारकलिङ्गतादिवक्रताया आधारो ध्वन्यालोकस्याधोलिखितकारिका प्रतीयते।

**सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।**
**कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्।।**[१]

अत एव कुन्तकस्य वक्रोक्तिदर्शनं कथमपि न ध्वनिविरोधि। अतो हेतोः ध्वनिविरोधिना महिमभट्टेन ध्वनिवक्रोक्त्योरभिन्नत्वं प्रत्यपादि। तेनोक्तं यत्-'यतः प्रसिद्धोपनिबन्धनव्यतिरेकित्वमिदं शब्दार्थयोरौचित्यमात्रपर्यवसायि स्यात्, प्रसिद्धाभिधेयार्थव्यतिरेकि प्रतीयमानाभिव्यक्तिपरं वा स्यात्........द्वितीय-पक्षपरिग्रहे पुनर्ध्वनेरेवेदं लक्षणमनया भङ्ग्या अभिहितं भवति, अभिन्नत्वाद् वस्तुनः। अतएव चास्य त एव प्रभेदास्तान्येवोदाहरणानि तैरुपदर्शितानि।' इति।

उपर्युक्तविवेचनेन स्पष्टमिदं यत् कुन्तकस्य वक्रोक्तिप्रस्थाने भामहप्रति-पादितं वक्रोक्तिदर्शनमेवास्ति मूलत्वेन स्थितम्। किन्तु कुन्तकस्य वक्रोक्तिर्भामहवक्रोक्तेरपि व्यापिका। कुन्तकेन सर्वमेव काव्यचारुत्वं तस्यामेव काव्यात्मभूतायां वक्रोक्तावन्तर्भावितम्। वक्रोक्तेः काव्यात्मत्वेन प्रतिपादनात् स्वयमेवालङ्काराणां प्रतीयमानार्थरहितानामप्युक्तिवैचित्र्यसद्भावात् चारुत्वं काव्ये प्रतिष्ठितम्। इत्थं कुन्तकः स्वकीये वक्रोक्तिदर्शने अलङ्कारसिद्धान्तं ध्वनिसिद्धान्तञ्चान्तर्भावयत्यविरोधेन। काव्य-नाट्ययोः सर्वस्वभूतो रस-सिद्धान्तोपि तस्यां वक्रोक्तावस्त्यन्तर्भावितः।

१. ध्व. ३.१६

सम्पूर्णमेव वक्रोक्तिदर्शनं ध्वनिसिद्धान्तप्रभावेण प्रभावितं दृश्यते। सामान्यतः कुन्तकम् अभिधावादिनं मत्वा ध्वनिविरोधिष्वाचार्येषु परिगणयन्ति समीक्षकाः। वस्तुतो नायं कण्ठतो ध्वनिविरोधी किन्तु, वक्रोक्तेः प्राधान्येन प्रतिपादनात् ध्वनेः प्राधान्यं स्वयमेवापलपितं भवति। अन्यथा वक्रोक्तेः सम्पूर्णं वितानं ध्वनिप्रभावेण विततं वर्तते यथा कविविवक्षितार्थप्रतिपादकत्वेन शब्दस्यापेक्षा वक्रोक्तौ तथैव ध्वनावपि। कुन्तकस्य गेहे चारुत्वसम्पादयित्री या काव्यसुन्दरी विचित्राभिधा सा व्यञ्जनास्वरूपैव प्रतिभाति हावभावहेलादिभिः। एवं वक्रोक्ति-ध्वनिसिद्धान्तयोः मिथः सादृश्ये संदृश्यमानेऽपिवक्रोक्तिसिद्धान्ताद् भिद्यते।।

## आचार्यमहिमभट्टः (१०००-११००ई०)

ध्वनिविरोधिष्वाचार्येष्वन्यतमो महिमभट्टो नितरां प्रसिद्धः साहित्य-समीक्षायाम्। अयं स्वयमेव स्वकीयव्यक्तिविवेकग्रन्थस्यान्तिमे विमर्शे सूचयति यत्-

**श्रीधैर्यस्याङ्गभुवा महाकवेः श्यामलस्य शिष्येण।**
**व्यक्तिविवेको विदधे राजानकमहिमकेनायम्।।**[1]

अनेन तस्य पितुर्नाम 'धैर्य' इतिगुरोर्नाम 'श्यामल' इति ज्ञायते। महिमभट्टस्य कुत्रचित् 'महिमा' कुत्रचिच्च 'महिमक' इति नामान्तेरणापि प्रयोगो व्यक्तिविवेके दृश्यते। तत्सर्वं तु एकस्यैव नाम्नः छन्दसः पूर्त्यनुसारि परिवर्तनं प्रतीयते। साहित्यशास्त्रपरम्परायां महिमभट्टस्य व्यक्तिविवेकर्तृत्वेनास्ति समुल्लेखोऽसकृत्।

महिमभट्टः काश्मीरब्राह्माणकुले समुत्पन्नोऽत्युत्कृष्टोऽध्यापक आसीत्। व्यक्तिविवेकस्य संरचना तेन छात्राणामभ्यर्थनया कृतेति तेन स्वयमेवोक्तम्-

**मुग्धः किं किमसभ्य एष भजते मात्सर्यमौनं नु किं**
**पृष्टो न प्रतिवक्ति यः किल जनस्तत्रेति सम्भावयेत्।**

---

१. व्य.वि. ३.३६

**छात्राभ्यर्थनया ततोऽद्य सहसैवोत्सृज्य मार्गं सतां**
**पौरोभाग्यमभागयभाजनजनासेव्यं मयाङ्गीकृतम्।।**[१]

तथा,

**आधातुं व्युत्पत्तिं नमृणां योगक्षेमभा ( भो ) जानाम्।**
**सत्सु प्रथिततनयानां भीमस्यामितगुणस्य तनयानाम्।।**[२]

भीमस्य पुत्रा अर्थात् पौत्रा ये महिमभट्टस्य, तस्यैव च शिष्यत्वं निर्वहन्त आसन् तेषां कृते व्यक्तिविवेकस्य संग्रथना महिमभट्टेन प्रायः स्वकीयजीवनस्योत्तरकाले कृता। महिमभट्टस्य जीवनकालविषयिणी निश्चिता कापि तथिर्नास्ति समुपलब्धा। अतः पण्डिता अन्तःप्रमाणैः बाह्यप्रमाणैश्च महिमभट्टस्थितिम् ईसवीयसंवत्सरस्य १००० ई० तः ११०० ई० यावत् तर्कयन्ति। यतो हि ध्वनिविरोधाय कृतसङ्ल्पोऽयमाचार्यः पदे पदे समुद्धरति ध्वनिकारमभिनवगुप्तपादञ्च। वक्रोक्तिकारस्यापि समुल्लेखः प्राप्यते व्यक्तिविवेके। अभिनवगुप्तपादात् महिमभट्टस्य परवर्त्तिताऽसंशया। व्यक्तिविवेककारोऽयमलङ्कारसर्वस्वकारेण रुय्यकेन समुदाहृतः। तेन व्यक्तिविवकेस्य टीकापि कृता। उत्तरवर्त्तिष्वाचार्येषु बहुत्र महिमभट्टस्योल्लेखः प्राप्यते किन्तु तेषु सर्वप्राचीनो रुय्यकः। यस्यालङ्कारसर्वस्वग्रन्थस्य संग्रथनं प्रायः ईसवीयसंवत्सरस्य ११५० तमेऽब्दे सञ्जातम्। तत्र महिमभट्टस्य समुल्लेखात् ततोऽपि पूर्ववर्त्तितास्य संसिद्धा। अतोऽभिनवगुप्तपादकालतः रुय्यककालात्पूर्वं यावद् अर्थात् १००० ई० तः ११०००ई० यावत् महिमभट्टस्य जीवातु कालो दोलायमानस्तिष्ठति।

सूक्ष्मनिरीक्षणेनावसीयते यत् म्मटभट्टोपि महिमभट्टात्परवर्त्यासीदिति। यद्यपि मम्मटेन न कुत्रापि नामोल्लेखपूर्वकः कश्चन निर्देशः कृतस्तथापि तस्योपरि महिमभट्टस्य प्रभावः परिलक्ष्यते। ततः प्रभाविता मम्मटस्य प्रतिपादनशैलीति शक्यते वक्तुम्। मम्मटेन काव्यप्रकाशस्य पञ्चमोल्लासे व्यञ्जनाया अन्तर्भावं दूषयितुं पूर्वपक्षरूपेण महिमभट्टस्यैव सिद्धान्तः समुपस्थापित इति समीक्षकाणां प्रतिपत्तिः। काव्यप्रकाशस्य दोषनिरूपणप्रकरणस्य मुख्यं

१. व्य.वि. २.१
२. तत्रैव. ३.३५

स्रोतः व्यक्तिविवेकस्य तृतीयो विमर्श एव। तत्र समुदाहृतानि विविधानि पद्यानि तेनैव क्रमेण काव्यप्रकाशे मम्मटेनाहृतानि सन्ति। महिमभट्टं प्रति मम्मटस्याधमर्ण्यमस्ति नितरां काव्यप्रकाशे प्रकाशितम्। मम्मटोपि भोजराजनृपतेः (९९६ई०–१०५९ई०) परवर्तीत रुय्यकाच्च पूर्ववर्त्ती।

महिमभट्टस्य एकैव कृतिः व्यक्तिविवेक इति समुपलभ्यते। तेन 'तत्त्वोक्तिकोश'– नामतः कश्चिदन्योपि ग्रन्थः प्रणीतः। यस्य समुल्लेखः तस्यैव व्यक्तिविवेके प्राप्यते।

**इत्यादि प्रतिभातत्त्वमस्माभिरुपपादितम्।**
**शास्त्रे तत्त्वोक्तिकोशाख्ये इति नेह प्रपञ्चितम्।।**[1]

तत्त्वोक्तिकोशाख्योऽयं ग्रन्थः अद्यावधि नोपलब्धः। व्यक्तिविवेक एव महिमभट्टं विदुषामत्युन्नतायां कोटौ संस्थापयति। व्यक्तिविवेकनाम्नैवास्याभिधेयं परिप्रकाशितमस्ति। तत्र टीकाकारेणोक्तं यत् व्यक्तिर्व्यञ्जनं तद्विवेकस्य करणं स्वप्रवृत्तिः। अर्थात् ध्वनिसिद्धान्तस्य मूलत्वेन स्थितायाः व्यञ्जना–शक्तेर्युक्तायुक्ततया परीक्षणमेव ग्रन्थस्य मौलिभूतं प्रयोजनमस्ति। ग्रन्थान्ते तेन स्वयमेवोक्तं यत्–

**प्राणभूता ध्वनेर्व्यक्तिरिति सैव विवेचिता।**
**यत्वन्तत्र विमतिः प्रायो नास्तीत्युपेक्षितम्।।**[2]

ग्रन्थारम्भे एव महिमभट्टेनोक्तं यत्–

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।।**[3]

यद्यपि सर्वस्यैव ध्वनेरनुमानेऽन्तर्भावं कर्तुं ग्रन्थमारभते महिमभट्टः किन्तु, अन्ततो व्यञ्जनाखण्डनमेव ध्वनिसिद्धान्तखण्डनार्थमङ्गीकरोति। तत्र व्यञ्जनायाः प्राधान्यमेव हेतुः। नहि प्रारम्भेऽन्यत्प्रयोजनम् अन्ते चान्यप्रति–पादनमिति कश्चिद् विरोधः ।

१. व्य.वि. २.११
२. तत्रैव ३.३३
३. तत्रैव १.१

महिमभट्टेन व्यञ्जनाया अनुमानेऽन्तर्भावं दृष्ट्वा प्रायः समीक्षकाः महिमभट्टं नैयायिकाचार्यत्वेन पश्यन्ति। परमस्ववाभाविकोऽयं व्यवहारः तथाहि सूक्ष्मेक्षिकया पर्य्यालोचनया महिमभट्टस्य यादृशाी अनुरक्तिर्व्याकरणदर्शने दृश्यते न तादृशी न्यायदर्शने यतो हि न्यायसिद्धान्तस्य विरोधेऽपि कदाचित् कुत्रचित् तस्य प्रवृत्तिर्दृश्यते यथा–

'आप्तोपदेशसामर्थ्याच्छब्दार्थसम्प्रत्ययः' इति गौतमसूत्रे। तेनाप्तोदेश–सामर्थ्याद् अर्थप्रतीतिर्नाङ्गीकृता। अभिहितञ्च तेन 'नहि युक्तिमनवगच्छन् कश्चिद्विपश्चिद् वचनमात्रात् सम्प्रत्ययभाग्भवति।' शब्दार्थयोर्मध्ये साध्यसाधन–भावस्यानिवार्यता तेन प्रतिपादिता। अन्यथा सर्वेषामाप्तोपदेशात् आर्थप्रतीतिः शक्यसम्भवा, न साध्यसाधनभावविदां विपश्चितामेव केवलम्। तथा जातिविशिष्टव्यक्तावेव सङ्केतग्रह इति प्राचीननैयायिकानां सिद्धान्तः किन्तु महिमभट्टस्तु 'जातिगुणक्रियाद्रव्याणां तत्तत्वप्रवृत्तिनिमित्तानां बहुत्वादि' ति वचनेन 'जातिगुणक्रियाद्रव्येषु सङ्केतग्रहं स्वीकरोति। निष्पद्यते येन वैयाकरणो महिमभट्ट इति।' तेन वाक्यपदीयतः विविधाः कारिकाः प्रमाणत्वेन व्यक्तिविवेके समुपस्थापिताः। यथा[१]–

**द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधाऽपि वा।**
**अपोधृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्॥**

**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।**
**क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते॥**

तन्मते पदार्थो वाच्यार्थो भवति वाक्यार्थस्तु अनुमेयार्थ एव। अतस्तेन वाक्यार्थस्य गौणताऽङ्गीकृता। अत्रापि वाक्यपदीयमेवाधारत्वेनादृतं तेन।[२]

**श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते।**
**तं मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितम्॥**

वैयाकरणरूपेण महिमभट्टस्य स्थितिः ग्रन्थस्य मङ्गलाचरणेनापि सिध्यति।

---

१. व्य. वि. १/२० वृ.
२. तत्रैव १/२० वृ.

**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।**[१]

परवाचः विशिष्टं वर्णनं शब्दब्रह्मरूपेण वाक्यपदीयस्य प्रथमायामेव कारिकायामस्ति समुपनिबद्धं प्रयोजनविशेषादेव।

**अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[२]

परमलघुमञ्जुषाकारेण नागेशभट्टेन परवाचो वर्णनप्रसङ्गे लिखितं यत् 'चतुर्विधा हि वागस्ति परा पश्यन्ती मध्यमा वैखरी च। तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परावागुच्यते।' अतो व्यक्तिविवेके मङ्गलाचारणमाचरतो महिमभट्टस्य परवाचः प्रणामेन तस्य व्याकरणदर्शनपरम्परावाहकत्वमस्ति प्रमाणितम्।

ध्वनिविरोधमूलकेषु सिद्धान्तेषु महिमभट्टस्यानुमितिवादोऽतीवप्रमुखः। तेन ध्वनिसिद्धान्तस्य प्राणभूतायाः व्यञ्जनायाः खण्डनं मुख्यतया स्वकीये व्यक्तिविवेकग्रन्थे प्रतिपादितम्। ध्वनिसिद्धान्ते येऽर्थाः व्यङ्ग्यार्थरूपेण प्रतिपादिता आसन् तेषां सर्वेषामनुमेयार्थत्वं तेन समुद्घोषितम्। फलतः काव्यार्थत्वेन प्रसिद्धार्थाः रसादयः अनुमेयार्थकोटौ समानीतास्तेन महिम्ना। न काव्यात्मनि रसादिरूपे अर्थे काचिद्विमतिरितिव्याहरन् महिमभट्टः काव्यस्यात्मत्वेन रसादिरूपमेवार्थमङ्गीकरोति। किन्तु ते रसादयो न व्यङ्ग्यार्था अपितु सहृदयैः समास्वाद्यमानास्ते अनुमितिवेद्या एव। अतस्तन्मते साध्यसाधन-भावमूला अनुमितिरेव व्यापारस्तत्र न तु व्यञ्जना। अनुमितिप्रत्यायितस्यार्थ-स्यानुमेयत्वमेव न व्यङ्ग्यत्वम्। मीमांसकैर्यथा स्वग्रन्थेषु अभिधया व्यङ्ग्यार्थस्याभिधेयत्वं, भक्तिवादिभिश्च भक्त्या भाक्तत्वं सिद्धान्तितं तथैव महिमभट्टेन स्वग्रन्थे साध्यसाधनभावमूलयानुमित्यानुमेयत्वं महता श्रमेण साधितम्। नायमनुमितिवादः प्रथमतया महिमभट्टेन साहित्यशास्त्रे आविष्कृतोऽपितु ततोऽपि पूर्वं श्रीशङ्कुकेन भरतरसनिष्पत्तिसूत्रस्य व्याख्यानावसरे रसस्यानुमेयत्वं प्रतिपादितम्। तेनोक्तं

१. व्य. वि. १/१
२. वा.पा. १/१

यद् व्यङ्ग्यार्थप्रतिपादनाय व्यञ्जनाया आवश्यकता नास्ति, तस्यानुमित्यावबोधात्। अस्मिन्नेव क्रमे महिमभट्टेन स्वकीयोऽनुमितिवादः सिद्धान्तितः। तन्मते शब्दस्य अभिधातिरिक्तो न कोऽपि व्यापारः सम्भवति। प्रतीयमानार्थो हि अभिधातोऽ-नुमानव्यापारबलेन निष्पद्यते। तन्मते शब्दार्थयोर्व्यङ्ग्यव्यञ्जकभाव एव नोपपद्यते। तथैव वस्त्वलङ्काररसादीनामभिव्यक्तिरसम्भवा। अर्थान्तरसङ्क्रमितवाच्यध्वनिः, अत्यन्तरिस्कृतवाच्यध्वनिः, संलक्ष्यक्रम-व्यङ्ग्यध्वनिरसंलक्ष्य-क्रमव्यङ्ग्यध्वनिश्चेति ये ध्वनिभेदाः ध्वनिकारेण महता संरम्भेण प्रदर्शितास्ते सर्वेऽपि नानुमानातिरिक्ता इति व्यक्तिविवेककारस्य मन्तव्यम्। ध्वन्यालोकग्रन्थस्य प्राचीना 'चन्द्रिका' टीका अभिनवगुप्तपादेन बहुशः लोचने समुदाहृताऽपि महिमभट्टेन न दृष्टा। तथैव भट्टनायककृतो हृदयदर्पणाख्यो ग्रन्थो नास्य दृष्टिसरणिसमागतः। अतः स्वकीयविवेचनपद्धतिमवलम्ब्य प्रवृत्तो महिमभट्टो ध्वनिध्वंसने। सामाजिकानां समक्षं हास्यास्पदं गमिष्यति अथवा दुर्गमे ध्वनिमार्गे स्खलिष्यति मम वाणीति संसूचयता तेन स्वविनयभावः प्रदर्शितः। तद्यथा-

**सहसा यशोऽभिसर्त्तुं समुद्यतादृष्टदर्पणा मम धीः।**
**स्वालङ्कारविकल्पप्रकल्पने वेत्ति कथमिवावद्यम्॥**

**ध्वनिवर्त्मन्यतिगहने स्खलखितं वाण्याः पदे पदे सुलभम्।**
**रसभेन यत् प्रवृत्ता प्रकाशकं चन्द्रिकाद्यदृष्ट्वैव॥ इति॥**[१]

### ध्वनिलक्षणे महिमभट्टप्रदर्शिता दश दोषाः

महिमभट्टो व्यक्तिविवेकस्य प्रथमे विमर्शे सर्वप्रथमं ध्वनिकारेण कृतं ध्वनिलक्षणमेव परामृशति। तेनोक्तं यत्-तत्र ध्वनेरेव तावल्लक्षणं वक्तव्यं कोऽयं ध्वनिर्नामेति। तच्च ध्वनिकारेणैवोक्तम्। तद्यथा-

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥इति॥**

एतच्च विविच्यमानमनुमानस्येव सङ्गच्छते, नान्यस्य। अतः परं महिमभट्टेन अस्मिन् ध्वनिलक्षणे दश दोषाः समुद्भाविताः। येषां संग्रहः प्रकरणान्ते

१. व्य. वि. १.४-५

कारिकाभ्यां कृतः।

**अर्थस्य विशिष्टत्वं, शब्दः सविशेषणस्तदः पुंस्त्वम्।**
**द्विवचन-वा -शब्दौ च, व्यक्तिर्ध्वनिर्नाम, काव्यवैशिष्ट्यम्॥**
**वचनञ्च कथनकर्त्तुः कथिता ध्वनिलक्ष्मणीति दश दोषाः।**
**ये त्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः॥**[१]

एतेषां दोषाणां परिमार्जनेन वाक्यस्यास्य परिशुद्धोऽर्थः अवतिष्ठते स च काव्यानुमितिरूप एव। तेनोक्तं यत्-

**वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।**
**सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता॥**[२]

एतच्चानुमानस्यैव लक्षणं नानयस्य। यदुक्तं 'त्रिरूपलिङ्गाख्यानं परार्थानुमानमिति। केवलं संज्ञाभेद' इति। तेन ध्वनिलक्षणे समुद्भाविता दोषाः क्रमशः प्रस्तूयन्ते ध्वनिवादिभिः कृतानि तत्खण्डनान्यपि यथावरं संक्षेपतः प्रदर्श्यन्ते।

## १. अर्थस्य विशिष्टत्वम्-

आनन्दवर्धनाचार्येण ध्वनिलक्षणकारिकायाम् 'उपसर्जनीकृतस्वार्थौ' इति विशेषणं ध्वनिलक्षणवाक्यान्तर्गतशब्दार्थयोरुपात्तम्। अर्थात् विशेष्यपदेन शब्दपदस्यार्थपदस्य च ग्रहणं कृतम्। तदभिनवगुप्तपादेन ध्वन्यालोकलोचने व्याख्यातं-'स्वशब्द आत्मवाची स्वञ्चार्थश्च तौ स्वार्थौ। तौ गुणीकृतौ याभ्यां यथासंख्येन तेनार्थो गुणीकृतात्मा शब्दश्च गुणीकृताभिधेयः'[३] इति। अयं सारः। ध्वनि काव्ये अर्थः स्वमुपसर्जनीकृत्य, शब्दश्च स्वाभिधेयमर्थं गुणीकृत्य प्रतीयमानमर्थं द्योतयतः। 'भ्रम धार्मिक विस्रब्धः' इत्यादि श्लोके भ्रमेत्यादि-नाभिहितो विधिरूपो व्याच्यार्थः स्वात्मानं गुणीकृत्य निषेधरूपिणं व्यङ्ग्यार्थं ध्वननेन द्योतयति। अत एवात्र वाच्यार्थस्य स्वोपसर्जनादुत्तमं ध्वनिकाव्यम्। अपि च।

---

१. व्य. वि. १.२३-२४
२. तत्रैव १/२५
३. ध्व. लोचनम्, १.१३

**उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः।**
**पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम्॥**[१]

अत्रापि प्रोल्लसद्धारादयश्शब्दाः पीनं मौक्तिकभूषितं, तरुणीकुचयुगलं वाच्यार्थं गुणीकृत्य मेघरूपिणमर्थं प्रत्याययन्तो द्वयोरर्थयोर्मिथः उपमानोपमेयभावं द्योतयन्ति। अतः शब्दाभिहिततरुणीकुचयुगलरूपार्थस्योपसर्जनात् शब्दः व्यङ्ग्यार्थं द्योतयतीति हेतोः ध्वनिकाव्यम्। यत्र च वाच्यार्थापेक्षया प्रतीयमानार्थस्य प्राधान्येनावस्थानं तत्र ध्वनिकाव्यमिति सिद्धान्तः।

महिमभट्टमतेन तु अर्थस्योपसर्जनीकृतस्वमिति विशेषणं ध्वनिलक्षणेऽनुचितमेव दुष्टत्वात्। यतो हि व्यऽग्यार्थस्य प्रतीत्यर्थमुपात्तस्य वाच्यार्थस्य प्रतीयमानार्थं प्रति नियतमुपसर्जनीभूतत्वम्। यो हि यदर्थमुपादीयते, नासौ उपसर्जनीकरोति। इति महिमभट्टस्य वचनम्। तेन प्रतिपादितं यदुपायस्योपेयं प्रति गुणीभावः प्रसिद्ध एव। वाच्यार्थो उपात्त। अत एव वाच्यार्थस्य व्यङ्ग्यार्थं प्रति गुणीभावत्वमव्यभिचारि। अव्यभिचारादिदं विशेषणमनुपपन्नमेवार्थस्य ध्वनिक्षणे, यो हि यदर्थमुपादीयते तस्य तं प्रति गुणत्वमितिनियमात् । यथा वह्न्यादिसिद्ध्यर्थमुपादीयमानस्य धूमस्य गुणत्वम्। अत उपसर्जनीकृतात्मत्वमिति विशेषणमर्थस्य सर्वथा दुष्टमिति। तथा–

**सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्।**
**न शैत्येन न चोष्णेन वह्निः क्वापि विशिष्यते ॥ इति।**

कुमारिलभट्टस्य वचनानुसारेण विशेषणपदस्योपादानं तदैव सार्थकं यदेदं व्यभिचारि सम्भवञ्च सद् व्यावर्तकं भवति।

यथा– 'नीलमुत्पलम्' इत्यत्र नीलमिति विशेषणं नीलोत्पलादौ तु स्वरूपे सम्भवाद् रक्तोत्पलादिष्वभावाच्च सम्भवं व्यभिचारि च सनीलमुत्पलं रक्तश्वेताद्युत्पलेभ्यो व्यावर्तयति। परं शीतो वह्निरित्यत्र वह्नेः शीत इति विशेषणं स्वरूपासिद्धं सदसम्भवम्। यद्यग्नेः शीतत्वं स्यात्तदैवोष्णत्वादिकं किञ्चिद् व्यवच्छेद्यं सम्भवेत्। यदि शीतत्वमेवाग्नौ न वर्तते तहि उष्णत्वादिकं न किमपि

१. व्य. वि. ३/ वृ.

व्यावर्तकं सम्भवति। यतः शीतलत्वं स्वरूपासिद्धत्वान्न किञ्चिद् व्यवच्छिनत्ति। अतो नाग्नेरिदं शीत इति विशेषणं सम्भवम्। असम्भवत्वाच्चेदं दुष्टं सदव्यवहार्यम्। 'उष्णो वह्निरित्यत्र' वह्नेरुष्णत्वं स्वरूपसिद्धमपि वह्नावनुष्णत्वादर्शनान्न व्याभिचरति, अतोऽव्यभिचारि सदुष्णं विशेषणं दुष्टम्। एवं सम्भवव्यभि-चाराभ्यामेव विशेषणमुपादीयते व्यावृत्तिनिमित्तमिति विशेषणलक्षणम्। यदि व्यावर्त्यमेव किञ्चिन्नास्ति तदा विशेषणपदोपादानमप्रयोजकमेव। अतः 'उपसर्जनीकृतात्मत्वमि' ति विशेषणमर्थस्य न सङ्गच्छते। ध्वनिकाव्ये अभिधेयार्थातिरिक्तस्य प्रतीयमानार्थस्य प्रतीतिर्भवति। अभिधेयार्थ एव प्रतीयमानार्थं प्रतीत्यर्थमवलम्बते। अत एव प्रतीयमानार्थं प्रति सैदव वाच्यार्थो गौण इति ध्वनिवादिभिरपि स्वीक्रियते, वाच्यार्थस्योपायत्वात् प्रतीयमानार्थस्य चोपेयत्वात्। उपायः सर्वदैवौपेयं प्रति गौणीभूत इति सार्वजनीनः सिद्धान्तः। अतः उपसर्जनीकृतात्मत्वमिति वाच्यार्थस्य विशेषणं ध्वनिलक्षणे दुष्टम् अव्यभिचारित्वात्। महिमभट्टेनार्थस्य प्रतीयमानार्थं प्रति गौणत्वप्रति-पादनार्थमनुमितेः प्रसिद्धमुदाहरणं प्रदर्शितम्-'पर्वतो वह्निमान् धूमात्' इति। साध्यस्य वह्नेः धूमहेतुना सिद्धिर्भवति। साध्यस्य विध्यर्थमेव हेतोरुपादानं भवति। साध्यस्य प्राधान्यं तत्सिद्ध्यर्थमुपायभूतस्य हेतोरप्राधान्यं निर्विवादसिद्धम्। तथैव प्रतीयमानार्थप्रतीतिं प्रति वाच्यार्थप्रतीतिस्तूपायमात्रम्। फलतः प्रतीयमानार्थस्य प्राधान्यं वाच्यार्थस्य तदपेक्षया गौणत्वं स्वतः सिद्धम्। धूमादिदृष्टान्ते महिमभट्टस्येदं तात्पर्यं यत्-व्यङ्ग्यार्थप्रतीतिं प्रति उपायभूतो वाच्यार्थोऽपि हेतुरेव। धूमाग्न्योर्मध्ये यथा हतुहेतुमद्भावो विद्यते, तद्वद्वाच्यार्थप्रतीयमानार्थयोर्मध्ये हेतुहेतुमद्भावोऽवश्यमङ्गीकार्यः।

## मीमांसा

ध्वनिकाव्यं तत्रैव भवति यत्र व्यङ्ग्यार्थस्य प्राधान्यं भवति। यत्र च वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य प्राधान्यं न भवति तत्र न ध्वनिकाव्यमपितु गुणीभूतव्यङ्ग्यं मध्यमं काव्यं भवति। अतः ध्वनिलक्षणस्यातिप्रसङ्ग-निवृत्त्यर्थमिदं विशेषणमर्थस्योपात्तं ध्वनिलक्षणे। एतद्विना ध्वनिकाव्यं गुणीभूतकाव्यमित्येकं तत्त्वं स्यात्। तयोरैक्यं मा भूदिति कृत्वा ध्वनिलक्षणे अर्थस्य विशेषणमिदमुपादेयमेव। यथा-

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्॥**

अत्र निशाशशिरूपिणो वाच्यार्थस्य प्राधान्याद् गुणीभूतव्यङ्ग्यं काव्यम्। नात्र नायकनायिकारूपिणो व्यङ्ग्यार्थस्य प्राधान्यम्। नास्त्यत्रार्थस्योपसर्जनीकृतात्मत्वं येन हेतुना ध्वनिकाव्यस्यापि विशेषणं सार्थकम्। किन्तु महिमभट्टोऽत्रापि अर्थस्यास्य विशेषणस्य व्याभिचाराभावं पश्यति। अत्र वाच्यार्थस्य प्राधान्यं न प्रतीयमानापेक्षयापितु प्रकरणापेक्षया। द्विविधं खलु प्राधान्यं सम्भवति। (१) प्राकरणिकत्वस्वरूपं प्राधान्यम् (२) प्रतीयमानत्वस्वरूपञ्च प्राधान्यम्। अत्र प्रकरणमेव वाच्यार्थं प्रधानत्वेन प्रतिपादयति। तथाहि निशाशशिरूपिणो वाच्यार्थस्य लिङ्गत्वात् उपसर्जनीकृतात्मत्वमित्यस्य विशेषणस्याव्यभिचार एव। यद्यपि गुणीभूतव्यङ्ग्ये प्रतीयमानापेक्षया वाच्यार्थस्य चारुत्वाधिक्यकृतं प्राधान्यमिति उपसर्जनीभावस्य व्यभिचार इति ध्वनिवादिभिर्वक्तुं शक्यते, तथापि महिमभट्टमते गुणीभूतव्यङ्ग्येऽपि काव्ये न वाच्यमात्रस्य चारुत्वमस्ति अपितु प्रतीयमाने अप्यर्थे चारुत्वप्रकर्षस्य प्रतिपादनं महिम्ना क्रियते। गुणीभूतव्यङ्ग्येऽपि काव्यं वाच्यार्थः प्रतीयमानार्थं प्रतिपादयति। वाच्यस्य प्रत्यायकत्वात् गौणत्वमवश्यमेव तस्याङ्गीकार्यम्। अतः वाच्ये उपसर्जनीभावस्य व्यभिचारो विशेषतः गुणीभूतव्यङ्ग्यकाव्ये वक्तुं शक्यम्। अत एव तेन संग्रहश्लोकः पठितः-

**उक्तं गुणीकृतात्मत्वं यदर्थस्य विशेषणम्।**
**गमकत्वान्न तत् तस्य युक्तमव्यभिचारतः॥**[1]

अतः गुणीभूतव्यङ्ग्येऽपि काव्ये प्रतीयमानार्थस्य सर्वदा गम्यत्वात्, वाच्यार्थस्य च 'यो हि यदर्थमुपादीयते' इत्याद्युक्तेः गमकत्वेनोपायत्वात् तद्विशेषणस्योपसर्जनीकृतात्मत्वस्य व्यभिचाराभावः। तदिदं व्याभिचाराभावादर्थस्य विशेषणं ध्वनिलक्षणेऽयुक्तमिति महिमभट्टस्याशयः।

---

१. व्य. वि. १.७

महिमभट्टोद्भावितार्थविशेषणगतदोषनिराकरणाय ध्वनिपक्षावलम्बी व्यक्तिविवेकव्याख्यानकारो रुय्यको ब्रूते यद् वाच्यार्थस्योपसर्जनीभावस्त्रिविधः सम्भवति।

१. यतोवाच्यार्थः प्रतीयमानार्थप्रत्यायने उपायरूपेणोपादीयते ततस्तस्योपायत्वादप्राधान्यम् अर्थस्य गुणीकृतात्मत्वञ्चोपपन्नम्।

२. प्रतीयमानार्थस्य काव्ये चारुत्वहेतुत्वाद् वाच्यार्थस्य चातथात्वात् प्रतीयमानापेक्षया यद् वाच्यार्थस्याचारुत्वं तत् तस्य गुणत्वम्।

३. ध्वनिकाव्ये वाच्यार्थं प्रतीयमानमर्थं प्रत्याय्योपरतो भवति नासावर्थान्तरेण प्रतीयमानेन प्रत्यावृत्योपस्क्रियते। अतः स्वात्मनि विश्रान्तत्वाद-प्यर्थस्य वाच्यस्य गुणत्वं युक्तम्।

अनेन रूपेण वाच्यार्थस्य गुणीकृतात्मत्वं तस्योपायत्वादचारुत्वात् स्वात्मनि विश्रान्तत्वाच्चेति त्रिभिः प्रकारैरुपपद्यते। तत्राद्यं पक्षद्वयं महिमभट्टेन यद्दूष्यते तत्र नास्ति किञ्चिद्वक्तव्यम्। यतो हि वाच्यार्थस्य प्रतीयमानार्थं प्रति सर्वदोपायरूपेणावस्थानादुपसर्जनीकृतात्मत्वमर्थविशेषणमव्यभिचारि। अचारुत्वे अपि न किञ्चिद् व्यावर्त्यमस्ति, गुणीभूतव्यङ्ग्येऽपि न वाच्यस्यैव चारुत्वम् प्रतीयमानार्थस्यापि चारुत्वदर्शनात् किन्तु, वाच्यार्थविश्रान्तिलक्षणस्तृतीयः पक्षः ध्वनिवादिना ध्वनिकाव्यस्य गुणीभूतव्यङ्ग्यकाव्यात् व्यवच्छेदनायाङ्गीकृतः। अतोऽत्र तृतीयपक्षे गुणीकृतात्मत्वस्य यत् स्वार्थविश्रान्तिलक्षणोऽर्थः गृह्यते तस्य व्यभिचारो गुणीभूतव्यङ्ग्यकाव्ये समुपलभ्यते। समासोक्त्याद्यलङ्कारप्रधानकाव्ये वाच्यार्थेन प्रतीयमानार्थप्रतीतिर्भवति तथाप्यसौ स्वविश्रान्तरूपेण न प्रतीयते। यतः पार्यन्तिकोऽयं व्यङ्ग्यार्थः वाच्यार्थस्योपस्कारकरूपेण पर्यवस्यति। अत एव गुणीभूतव्यङ्ग्ये काव्ये वाच्यार्थः स्वविश्रान्तः स्थित्वा अर्थान्तरेण प्रतीयमानेन उपकार्यो भवति। यथा 'उपोढरागेण.....।' इत्यादौ निशाशशिरूपो वाच्यार्थः उपस्कारकं कञ्चिदपेक्षमाणस्तिष्ठति तथा चायमर्थो नायकनायिकारूपेण प्रतीयमानार्थेनोपस्क्रियते। ततो नायकनायिका व्यवहारसमारोपान्निशाशशिरूपो वाच्यार्थोऽर्थान्तरेणोपस्कृतः चारुत्वातिशयवान् भवति। तथा ध्वनिका-

व्येऽर्थान्तरानुपस्कारकरणात् तस्य गुणीभावः। परं समासोक्त्यादौ न तथा तत्र तु प्रतीयमानेनार्थान्तरेणोपस्कारकरणात् स्वात्मनि विश्रान्तत्वाच्च तस्य प्राधान्यम्। अतोऽर्थस्योपसर्जनीकृतात्ममिति विशेषणं व्यावर्तकं ध्वनिकाव्यस्य गुणीभूत-व्यङ्ग्यकाव्यादस्त्येव। अत एव रुय्यको निम्नलिखितं श्लोकमुद्धृत्य स्वमतं द्रढयति।

**'गुणीकृतात्मतार्थस्य न प्रतीतावुपायता।**
**न चारुत्वमपि त्वर्थबौद्धैरनुपकार्यता॥' इति।**

**२. शब्दः**

ध्वनिलक्षणकारिकायां शब्दस्य व्यञ्जकोक्तिर्नोपपद्यते। शब्दस्य एक एव व्यापारः स चाभिधाख्यः। अन्यः सर्वोपि व्यापारोऽर्थस्यैव। शब्दात् वाच्यातिरिक्तस्य न कस्याप्यर्थस्य प्रतीतिर्भवति। शब्दोभिधया स्वाभिधेयं प्रत्याय्योपरतो भवति। वाच्यार्थादनन्तरं लक्ष्यव्यङ्ग्यादिकस्य प्रतिपत्तिः। अतः ध्वनिलक्षणे शब्दस्य व्यञ्जकत्वेन समुल्लेखो नोचितः।

**उक्तं वृथैव शब्दस्योपादानं लक्षणे ध्वनेः।**
**नहि तच्छक्तिमूलेष्टा काचिदर्थान्तरे गतिः॥**[१]

## मीमांसा

तत्र ध्वनिवादिनो ब्रुवते-शब्दस्य व्यञ्जकत्वमस्त्येव। अन्यथा शब्दशक्ति मूलध्वनौ ध्वन्यमानस्याप्राकरणिकस्यार्थस्य प्रतिपत्तिरसम्भवा। यथा-

**भद्रात्मनो दुरधिरोहतनोर्विशाल-**
**वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।**
**यस्यानुपप्लुगतेः परवारणस्य**
**दानाम्बुसेकसुभगः सततं करोऽभूत्॥**

इत्यत्र शब्दशक्तिमूलध्वनौ प्रकारणिकार्थप्रतिपादनपरिक्षीणाऽभिधा संयोगादिभिः प्रतिबन्धकैर्नियन्त्रिता अप्राकरणिकं गजरूपमर्थं बोधयितुं न प्रभवति। मुख्यार्थबाधादिहेत्वाभावात् लक्षणापि नास्ति प्रसक्ता, तात्पर्यशक्तिरपि

१. व्य. वि. १.२८

संसर्गबोधमात्रपर्यवसितत्वादत्रासमर्था। अतोऽभिधातात्पर्य-लक्षणानां वृत्तीनामप्रसरणादप्राकरणिकोऽर्थः व्यञ्जनागम्य एव। यदि शब्दस्य व्यञ्जनाव्यापारो विप्रतिपद्यते तर्हि शब्दशक्तिमूलध्वनौ सम्प्रतीतोऽप्राकरणिकोऽर्थः किंव्यापारविषयकः? अनन्यलभ्यो हि शब्दार्थ इति विदुषां वाक्यार्थविदां सिद्धान्तः। अतः शब्दादेवाप्राकरणिकोऽर्थोऽत्रावसीयते। अवश्यमेवात्र कश्चन शब्दव्यापारः कल्पनीयः, विना व्यापारेण असम्भवा शब्दार्थप्रतीतिः। स च शब्दस्य व्यापारो व्यञ्जनाख्य एव। अतः शब्दशक्तिमूलध्वनौ अप्राकरणि-कार्थप्रत्यायने व्यञ्जनाव्यापाराश्रयणात् शब्दस्य व्यञ्जकत्वमुपपन्नमेव। फलतः ध्वनिलक्षणे व्यञ्जकत्वेन शब्दस्य ग्रहणमावश्यकमेव।

### ३. सविशेषणः

ध्वनिलक्षणे शब्दस्य यद्विशेषणम् 'उपसर्जनीकृतस्वार्थ इति सन्निवेशितं वर्तते तदप्यसमीचीनम्। शब्दस्य स्वार्थाभिधानमेव व्यापारः अर्थप्रतीत्यर्थं शब्दस्तूपायमात्रम्, अर्थस्तूपेयः। अथार्थस्य प्राधान्यम् उपेयत्वात्, शब्दस्य चाप्राधान्यमुपायत्वात्। अतः शब्दस्य गुणीकृतार्थत्वं न सम्भवति, सम्भवति केवलमनुकरणे। अर्थाद् यत्रान्यस्योक्तेरनुकरणमथवा उक्तिस्वरूपरचनानुकरणं तत्रैव शब्दस्य गुणीकृतार्थत्वं सम्भवति। यतो हि तत्रानुक्रियमाणोक्तेः अर्थो न विवक्षितः तत्र केवलं शब्द एव प्रतिपाद्यो न त्वर्थः। महिम्ना उदाहरणत्वेन रघुवंशस्य पद्यमिदमुद्धृतम्।[1]

**तं कर्णमूलमागत्य पलितच्छद्मना जरा।**
**कैकेयीशङ्कयेवाह रामे श्रीर्न्यस्यतामिति।।**

इत्यत्र 'रामे श्रीः न्यस्यताम्' इतिवाक्यमनुकरणात्मकमेव। अत्र शब्दः स्वार्थमुपसर्जनीकृत्य प्रधानभावेनावतिष्ठते। अनुकरणभिन्नस्थलेषु शब्दस्यार्थार्थ-मुपादानात्तस्य सर्वत्रैव गौणत्वमेव। यथा उदकार्थमुपादीयमानस्य घटस्य गौणत्वम्, स्वप्नेऽपि नोदकस्य गौणत्वम्। अतोऽर्थस्य मुख्यत्वं यस्य कृते शब्द उपादीयते। एवम् उपसर्जनीकृतस्वार्थः इति शब्दस्य विशेषणं युज्यते।

---

१. व्य. वि. १.७ वृ.

## मीमांसा

यत्र शब्दो व्यञ्जकः प्राकरणिकमर्थम् उपसर्जनीकृत्याप्राकरणिकमर्थमभिव्यनक्ति तत्रापि ध्वनिलक्षणस्य प्रसक्तिः स्यात् तत्तु सर्वथा ध्वनिसिद्धान्तविरुद्धमेव। व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिकाव्यं तस्याप्राधान्ये गुणीभूतव्यङ्ग्यकाव्यमिति व्यक्तिवादिनां सिद्धान्तः। तद्यथा–

**दृष्ट्या केशव गोपरागहृतया किञ्चिन्न दृष्टं मया**
**तेनैव स्खलितास्मि नाथ पतितां किं नाम नालम्बसे।**
**एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति-**
**र्गोप्यैवं गदितः सलेशमवताद् गोष्ठे हरिर्वश्चिरम्।।**

इत्यस्मिन् श्लोके शब्दः प्रथममभिधया वाच्यार्थमिमं प्रकाशयति–

हे केशव! मम दृष्टिः गोधूलिना व्याहता, अत एवाहं न किञ्चित् पश्यामि। तेन हेतुना अहं मार्गे स्लखिता भवामि। हे नाथ पतितां मां कस्मात् कारणात् हस्तेन न धारयसि? यतस्त्वमेव निम्नोन्नतेषु विमषेषु स्थानेषु गन्तुम् असमर्थानां सर्वेषां बालवृद्धानां गतिः।

तत्पश्चादस्मादेव शब्दादर्थान्तरस्य बोधो भवति–हे केशव! हे गोपस्वामिन्! त्वां प्रत्यनुरागात् मम सदसद्विवेकिनी बुद्धिरपहृता। एवमपहृतदृष्ट्याऽहं स्खलितास्मि (भ्रष्टचारित्र्या भवामि) अत एव मां प्रति पतिताम् अर्थात् पत्युर्भावं कथं न धारयसि? त्वमेव एकोऽसाधारणः सौभाग्यशाली यतो विषमेषु खिन्मनसाम् अर्थात् कामपीडितचित्तानां सर्वाबलानाम् अर्थात् सर्वासाम् अवलानां गतिः अर्थात् प्राणरक्षणोपायः इति।

श्लाकेऽस्मिन्नभिधाव्यापारो गोधूल्यादिरूपं वाच्यार्थं प्रत्याय्य संयोगादिभिर्नियन्त्रितो भवति। फलतो द्वितीयमर्थं बोधयितुमसमर्थो भवति। गोपीरागरूपो द्वितीयमर्थं बोधयितुमसमर्थो भवति। गोपीरागरूपो द्वितीयोऽर्थः शब्दस्य व्ञ्जनाव्यापारेणैव प्रकाश्यते। ध्वन्यमानोऽयमर्थः 'सलेशम्' इति पदेन स्फुटीकृतः। यदि पदमिदं न स्यात्तर्हि अस्यैवार्थस्य ध्वननात् प्राधान्यं भवेत्। तथासत्यत्र ध्वनिकाव्यं भवेत्। किन्तु सलेशपदस्पृष्टो व्यङ्ग्यार्थोत्राभिधेयपदवीमवतरति। अतस्तत्र चारुत्वातिशयो नानुभूयते सहृदयैः। अनेनैव हेतुना

ध्वनिलक्षणे शब्दस्योपसर्जनीकृतार्थत्वमिति विशेषणं ध्वनिकारेण प्रयुक्तम्। यत्र शब्दः स्वाभिधेयार्थं गुणीकरोति तत्रैव उत्तमं काव्यं अन्यथा गुणीभूत-व्यङ्ग्यमेव मध्यमं काव्यम्। उपर्युक्तपद्ये शब्दः गोधूलिरूपिणमर्थ न गुणीकरोति। फलतः न तत्र काव्यमुत्तमम्। अतः सप्रयोजनमेवोसपर्जनीकृतार्थत्वमितिविषेषणं शब्दस्येति पक्षो ध्वनिवादिनाम्।

**४. तदः पुंस्त्वम्-**

ध्वनिलक्षणकारिकायां 'यत्रार्थः शब्दो वा तमर्थम्' इत्यत्र तम् पुंस्त्वेन निर्देशो नोचितः। सर्वनामशब्दानां पूर्वपरामर्शकत्वात्। पूर्ववर्त्तिलिङ्गवचनैरेव निर्देशो भवति। अर्थात् पूर्वोपात्तपदलिङ्ग-वचनानुसारेणैव अन्नतरप्रक्रान्तस्य सर्वनामपदस्य वचनलिङ्गनिर्देशो भवति। नह्यत्र पुलिङ्गविशिष्टः कश्चन अर्थः पूर्वं प्रक्रान्तः।

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।**[१]

इत्यत्र नपुसकलिङ्गेनैव 'वस्तु' पदस्य निर्देशो लभ्यते। तथैव ध्वनिलक्षणेऽपि 'तम्' इत्यस्मिन् स्थले 'तद्'-इत्यस्यैव निर्देशो युज्यते। अथवा पूर्वस्मिन् स्थलेऽपि पुंस्त्वेन निर्देशो दोषाय पूर्ववर्तिपुंस्त्वविशिष्टसंज्ञापद-निर्देशाभावात्।

## मीमांसा

तत्र ध्वनिवादिनामिदमुत्तरं यत् लक्षणकारिकाया अव्यवहितपूर्वायां कारिकायां 'सोऽर्थः' इति पुल्लिङ्गेनास्ति निर्देशः तद्यथा

**तद्वत् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।**
**बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते।।**[२]

इत्यत्र 'सोऽर्थः' इति पुंस्त्वेन निर्दिष्टं पदमेवानुसृत्य ध्वनिलक्षणे पुंस्त्वेन सर्वनाम्नाऽस्ति निर्देशः। अतः पूर्वप्रकान्तलिङ्गमेवाश्रित्य लक्षणे पुंस्त्व-विधानं सर्वर्थोपपन्नम्।

१. व्य. वि. १/२२ वृ.
२. तत्रैव . १/२२ वृ.

### ५-६ द्विवचन-वा-शब्दौ-

ध्वनिलक्षणकारिकायां 'वा ' इति पदं 'व्यङ्क्त' इति च क्रियापदं दुष्टमिति महिमभट्टस्याक्षेप:। तथाहि -तत्र 'वा' पदं विकल्पार्थकं समुच्ययार्थकं वा। विकल्पार्थकं भवितुं नार्हति, शब्दस्य व्यञ्जकत्वाभावात्। शब्दस्य एक एव व्यापार:, स च अभिधाव्यापार एव। अन्य: सर्वोऽपि व्यापारोऽर्थस्यैव। यदि शब्दार्थयोर्द्वयोर्व्यञ्जकत्वं स्यात्तर्हि शब्दो व्यनक्तु अर्थो वेति वैकल्पिक: पक्ष: सम्भवति। किन्तु शब्दस्य एक एवाभिधाव्यापारस्तस्मादत्र 'वा' इति पदं नास्ति विकल्पार्थकम्। वैकल्पिकार्थसद्भावेऽपि 'व्यङ्क्त:' इतिक्रियापदस्य द्विवचनान्तत्वमसङ्गतम्। यतो हि विकल्पार्थकस्य वेति पदस्य समभिव्याहारे क्रियापदमेकवचनान्तमेव भवति। यथा[१]-

**परित्यक्ते देहे रणशिरसि शोकान्धमनसा।**
**शिर: श्वा काको वा द्रुपदतनयो वा परिमृशेत्॥**

अत्र हि विकल्पार्थकस्य वा -शब्दस्य प्रयोगोऽस्ति तथा क्रियापद-मेकवचनान्तमेवास्ति न बहुवचनान्तं तथैव ध्वनिलक्षणकारिकायामपि विकल्पार्थस्याभीप्सायामेकवचनान्तमेव क्रियापदमपेक्षितमासीत् तत्तु नास्ति। अतोऽत्र द्विवचनान्तक्रियापदप्रयोगेण विकल्पार्थको 'वा' इति शब्दो न युज्यते वाक्ये। नास्ति समुच्चयार्थकोऽपि। समुच्चयार्थके सति यत्र केवलस्य शब्दस्यैव व्यञ्जकत्वमर्थस्य वा, न तु शब्दार्थयोरुभयोस्तत्र ध्वनित्वं न स्यात्। येन शब्दशक्ति-मूलोऽर्थशक्तिमूलश्चेति ध्वनिकारेण विहितो ध्वनेर्विभाग एवानुपपन्नो भवति। तथा 'वा' -पदे समुच्चयार्थके सति शब्दार्थयो: समवेतत्वेन व्यञ्जकत्वात्। 'उपसर्जनीकृतस्वार्थ:'-इति शब्दविशेषणं ध्वनिलक्षणेऽनावश्यकं स्यात्। अर्थविशेषणग्रहणेन तस्य विशेषणत्वेन ग्रहणं भवत्यत: शब्दस्य पृथग्विशेष-ग्रहणमिति चेत्, तर्हि लक्षणवाक्ये अभिधाप्युपादेया अलङ्काराणामपि व्यञ्जकत्वाभ्युपगमात्। अतो ध्वनिलक्षणे 'वा' इति पदं न विकल्पार्थकं नापि समुच्चयार्थकम् अतस्तदुपादानमनुचितमेव।

---

१. व्य. वि. १.२२

## मीमांसा

व्यक्तिवादिनां मते शब्दस्य न केवलमभिधाव्यापारोऽपितु व्यञ्जनाव्यापारोऽपि सिद्ध एव। शब्दशक्तिमूलध्वनौ शब्दव्यञ्जकताया अनिवार्यत्वात् शब्दव्यञ्जकत्वं नास्त्युपहसनयोग्यम्। अतो ध्वनिकारिकायां विकल्पार्थकं 'वा'-पदं सर्वार्थोपपन्नमेव। तत्र यत् क्रियापदं विदूष्यते भट्टनायकादिभिस्तत्तेषामतात्पर्यज्ञतैव। यतो हि शब्दार्थयोः द्वयोरत्रध्वनिसिद्धान्ते परस्परं सहकारिता। नितरामस्त्यपेक्षिता। तथा हि अविवक्षित-वाच्यध्वनौ यद्यपि शब्द एव प्राधान्येन व्यञ्जकस्तथापि असावर्थस्य सहकारितामपेक्षते नितान्तम्। अन्यथा निरर्थकोपि शब्दः व्यञ्जको भवेत्।

विवक्षितान्यपरवाच्यध्वनौ च प्राधान्येनार्थ एव व्यञ्जकः किन्तु तत्राप्यसौ शब्दस्य सहकारितामपेक्षत एव। उक्तञ्चाभिनवगुप्तपादैः—'व्यङ्क्तः' इति द्विवचनेनेदमाह-यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथाप्यर्थस्यापि सहकारिता न त्रुट्यति अन्यथा अज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात्, विक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापारः। तेन यद्भट्टनायकेन द्विवचनं दूषितं तद् गजनिमीलिकयैव। अर्थः शब्दो वेति विकल्पाभिधानं प्राधान्याभिप्रायेणैव।'[१]

फलतः शब्दार्थयोर्द्वयोः परस्परं सहकारित्वेनावस्थानात् द्वयोश्च व्यञ्जकत्वाद् यद् 'व्यङ्क्तः' इति द्विवचनान्तं क्रियापदं ध्वनिलक्षणकारिकायां प्रयुक्तं ध्वनिकारेण तत्सर्वथोचितमेव।

### ७. व्यक्तिः

महिमभट्टनोक्तं यत्- 'सतो वाऽर्थस्य प्रकाशमानस्य सम्बन्ध-स्मरणानवेक्षिणा प्रकाशकेन सहैव प्रकाश-विषयतापत्तिरभिव्यक्तिरिति तल्लक्षणमाचक्षते'। अयमाशयः- प्रकाशकेन सहैव प्रकाश्यस्य प्रकटनं व्यक्तिः। तथाहि प्रकाशकेन दीपेन सहैव यदा प्रकाश्यो घटः प्रकाशविषयतामुपयाति तदैव घटस्य व्यक्तिर्भवति। किन्तु, व्यञ्जकेनार्थेन सहैव व्यङ्ग्यार्थो

---

१. ध्व. १.१३ लो.

नोपयात्यभिव्यक्तिविषयताम्, प्रत्युत व्यङ्‌ग्यव्यञ्जकयो: प्रतीति: क्रमेण भवति। व्यञ्जकाद् व्यङ्‌ग्यार्थस्य क्रमेण प्रतीते: साध्यसाधनभाव: समुपजायते न तु व्यङ्‌ग्यव्यञ्जकभाव:। अतो लक्षणकारिकायां व्यक्ते: समुल्लेखो दोषावह इति।

## मीमांसा

वस्तुतो महिमभट्टेन व्यक्तेर्यत् स्वरूपं प्रतिपादितं न तद्‌ध्वनि-वादिनामिष्टम्। नहि व्यञ्जकप्रतीतिसमये व्यङग्यार्थप्रतीतिरिति व्यक्ते: स्वरूपम् अपितु, यथा पदार्थपूर्विका वाक्यार्थप्रतीतिस्तथैव व्यञ्जकज्ञानपूर्विका व्यङ्‌ग्यार्थप्रतीतिरिति ध्वनिवादिनां सिद्धान्त:। अत: लक्षणे व्यक्ते: समुल्लेखो न दोषपूर्ण:।

### ८. ध्वनिर्नाम, ९. काव्यवैशिष्ट्यम्

ध्वनिलक्षणकारिकायां 'काव्यविशेषो ध्वनि' रित्यत्र प्रयुक्तं विशेषपदं किं प्रभेदार्थकम्? अथवातिशयार्थकम्? नाद्य:। यतो हि ध्वनिकारेण ध्वनिकाव्यं विशिष्टकाव्यत्वेन प्रतिपादितम्। परन्तु काव्यवैशिष्ट्यं व्यञ्जकवैशिष्ट्यं व्यङ्‌ग्यकृतं वेति विचारणीयम्। रसात्मन: काव्यस्य विशेषो न कदापि वस्तुमात्रादिभिर्व्यञ्जकैराधातुं शक्यते। यतो रसाभिव्यक्तिं प्रति ते विभावादिरूपेण हेतव: । सर्वस्यैव काव्यभेदस्य रस एव मुख्यतया पर्यवसानं भवति। वस्तुध्वनिरलङ्‌कारध्वनिश्च रसं प्रति पर्यवस्यत:। यदि व्यङ्‌ग्यस्य वैशिष्ट्यं व्यञ्जककृतं तदा तत् वस्तुध्वनौ अलङ्कारध्वनौ च सम्भवेत्। अत: 'काव्यविशेष' इति पदेन वस्त्वलङ्कारध्वन्योरेव ग्रहणं भवेत्। वैशिष्ट्याभावात् न रसध्वने: अत एव अव्याप्तिलक्षणदोष आपतति। प्रहेलिकादौ च काव्यत्वप्रसरे अतिव्याप्तिदोषो भवति। समासोक्त्यादौ गुणीभूतव्यङ्‌ग्ये रसवत्वेनैव काव्यत्वं महिमभट्टेनाङ्‌गीकृतम्। अत एव ध्वनिकाव्यात् समासोक्त्यादिगुणीभूतव्य-ङ्‌ग्यस्य पृथक्करणं नोचितम्।

यदि व्यञ्जककृतो विशेष: स्वीक्रियते तर्हि यत्र व्यङ्ग्यस्य वस्तुनो व्यञ्जकत्वम् अथवा वस्त्वलङ्‌कारभेदने व्यङ्‌ग्यस्य भेद: तत्रैव ध्वनिव्यप-देशोऽभिप्रेत: स्यात्। तदा रसध्वनिर्न संगृहीतो भवेत् तस्य वैशिष्ट्याभावात्।

अतो वैशिष्ट्यं काव्यस्य न व्यञ्जककृतं न वा व्यङ्ग्यकृतं भवति। ध्वनौ काव्यविशेषेऽभ्युपगते सति–

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।।**

स्ववचनविरोधात्। अर्थात् रससद्भावे काव्यत्वं ध्वनिकारसम्मतम्। अन्यथा 'काव्यस्यात्मा..। इतिकारिकावचनविरोधः । अतः रससद्भावेनैव सर्वथा काव्यव्यपदेशः तथा सति काव्यत्वं ध्वनित्वञ्चेत्येकं तत्त्वम्। उभयोः स्वरूपेणाभेदात्। अतः रससद्भावेनैव यदि काव्यत्वं तदा काव्यपदमात्रेणैव तद्ग्रहणात् काव्यरसयोः पर्यायता सिद्धैव। तेन हेतुना ध्वनिकाव्यस्य विशेषपदेन व्यपदेशो निरर्थकः। यदि काव्यत्वं रसव्यतिरिक्तं सम्भवेत्तदा तस्य नीरसकाव्यात् व्यावर्तनाय ध्वनिलक्षणे प्रभेदार्थको विशेषशब्दः सार्थकः स्यात् किन्तु नास्ति तथा। अतः विशेषपदेन काव्यवैशिष्ट्यप्रतिपादनमनुपन्नमेव। गुणीभूतव्यङ्ग्यं काव्यमात्रं ध्वनिश्च काव्यविशेष इति कथनमपि न समीचीनम्। यतो हि गुणीभूतव्यङ्ग्यकाव्येऽपि प्रकृष्टचारुत्वदर्शनात् ध्वनिकाव्यतोऽभेदता तेन प्रतिपादिता–

**यदि काव्ये गुणीभूतव्यङ्ग्येऽपीष्टैव चारुता।**
**प्रकर्षशालिनि तर्हि व्यर्थ एवादरो ध्वनौ।।**[1]

अतः रससद्भावेनैव काव्यत्वसम्भवात् सर्वत्र व्यङ्ग्यकृतप्रकृत-प्रकृष्टचारुत्वदर्शनात् काव्यस्य स्वरूपकृतं वैशिष्ट्यं नोपयुज्यते। तत एव विशेषपदस्य प्रभेदार्थे प्रयोगोऽयुक्तः।

न द्वितीयोऽतिशयार्थकः। ध्वनिकाव्ये किंकृतोऽतिशयो येन ध्वनेः काव्यविशेषाभिधानमन्वर्थकं स्यात्। नहि निरतिशयानन्दमयस्य रसस्य कश्चिदतिशयः येन ध्वनिकाव्ये तत्कृतं वैशिष्ट्यं सम्भवेत्। रसानुभूतिसमये सहृदयाः स्वहृदयसंवादवशात् अर्थात् स्वसंवदाह्लादरूपं रसमास्वादयन्तो नान्यत् किञ्चिद् वेदयन्ति।

---

१. व्य. वि. १.९६

**पाठ्यादथ ध्रुवगानात् ततः सम्पूरिते रसे।**
**तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः क्षणम्।।**
**ततो निर्विषयस्यास्य स्वरूपावस्थितौ निजः।**
**व्यज्यते ह्लादनिष्यन्दो येन तृप्यन्ति योगिनः।।**[१]

अतो रसस्य निरतिशयानन्दमयत्वाद् ध्वनिलक्षणे विशेषशब्दस्याति-शयपर्यायतया ग्रहणमनुपपन्नम्। यदा न स्वरूपकृतं न वा रसकृतं काव्यवैशिष्ट्यं सम्भवति तदा तन्निबन्धनः काव्यस्य ध्वनिव्यपदेशोऽपि निर्निर्बन्ध एव। उक्तञ्च महिम्ना–'इत्थं च काव्यस्य विशिष्टतानुपपत्तावितरतल्लक्षणविधायिमतातिरिक्तं न किञ्चिदनेनाभिहितं स्यात्' अन्यत्र ध्वनिव्यपदेशमात्रम्।' कथञ्चित् काव्यवैशिष्ट्येऽभ्युपगतेऽपि तदावाच्यमेव, यतः उपसर्जनीकृतस्वार्थः इत्यादि विशेषणादेव तदाक्षिप्तं भवति। यथाश्वारूढः पुरुषः अश्वारोहणात् विशेषत्वेनावगतो भवति। इत्थं लक्षणकरणेनैव काव्यस्य वैशिष्ट्यं स्वतः सिद्धम्। तथा अवाच्यस्य विशेषणपदस्योपादानाद् अवाच्यवचनं नाम लक्षणदूषणमत्र।

## मीमांसा

वस्तुतः महिमभट्टेन ध्वनिवादिनामाशयमनवबुध्यैव दोषारोपणमत्र क्रियते। ध्वनिनिकाये काव्यं द्विविधं स्वकृतमस्ति मुख्यं गौणञ्च। ध्वनिकारिकायां 'विशेष-' प्रदप्रयोगेण मुख्यस्यैव काव्यस्य ध्वनित्वं ख्याप्यते नामुख्यस्य विशेषपदाभावे मुख्यगौणभेदोपत्तिः काव्यस्य नोपपद्यते। अतो विशेषपदप्रयोगो ध्वनिलक्षणे परमावश्यकः। ध्वनेः काव्यवैशिष्ट्येनाभ्युपगते सति काव्यस्य-त्रिविधो विभागः समुपपद्यते। यत्र रसस्य मुख्यता तत्र रसध्वनिः। यत्र रसस्यामुख्यता वस्त्वलङ्कारव्यङ्ग्ययोश्च मुख्यता तत्र, वस्त्वलङ्कारध्वनी भवतः यत्र च वाच्यार्थो वस्त्वलङ्काररूपव्यङ्ग्यत्रितयमप्यतिशेते तत्र वाच्यार्थोप-स्कारित्वेन व्यङ्ग्यार्थस्य तस्य च गुणीभावात् गुणीभूतव्यङ्ग्यं मध्यमं काव्यम्। यत्र च रसवस्त्वलङ्कारव्यङ्ग्याभावः केवलं वाच्यवाचकरचनावैचित्र्यमेव तत्तु चित्रं (काव्यस्य)। मम्मटमते चित्रकाव्यमधमम्। एवं मुख्यगौणकाव्ये 'विशेष' पदेन व्यावर्त्ये सति ध्वनिलक्षणे 'विशेष' पदप्रयोगो नावद्यः। तथा च

१. व्य. वि. वृ. १.२२

ध्वनिकाव्यस्य वैशिष्ट्ये समुपपन्ने ध्वनिरित्यभिधानमपि सर्वथावश्यकमेव।

**१०. वचनञ्च कथनकर्त्तुः**

ध्वनिकारिकायां 'सूरिभिः कथितः' इति कथनक्रियायाः सूरिभिरित्यनेन कर्तृनिर्देशो दुष्टः यदि 'कथितः' इति क्रियायाः सामान्यः कर्त्ता गृह्यते तदा कर्त्रा विना क्रियानुपपन्नेतिनयेन क्रियायाः सामान्यः कर्त्ता स्वयमेवाक्षिप्यते। यदि कर्त्तृविशेषस्य विवक्षा तदा विचारविशेषरूपव्यापारविशेषात् तत्कर्तृविशेषस्य सामर्थ्यलब्धत्वात् कर्त्तृविशेषस्य वचनं पुनरुक्तिदोषमेव जनयतीति हेतोः अवाच्यवचनमेवात्र दोषः। तस्माद्धेतोः सूरिभिरितिपदं लक्षणवाक्ये नोपादेयम्।

## मीमांसा

तत्र सूरिभिरिति पदं ध्वनिसिद्धान्तस्य परम्परां सूचयति। नायं ध्वनिसिद्धन्तः कपोलकल्पितः अपितु स्फोटवादिनां विद्वन्मूर्धन्यानां वैयाकरणानामनुमतः सिद्धान्तः। अतो ग्रन्थकारस्येयमुक्तिः पूर्वाचार्याणां श्रद्धातिशयख्यापिका, ध्वनिसिद्धान्तस्य विद्वद्ग्राह्यत्वसूचिका चास्ति। अतः लक्षणवाक्ये सूरिभिरित्यस्य साभिप्राय एवोल्लेख इति।

**शब्दस्वरूपनिरूपणम्**

महिमभट्टोऽपि काव्यात्मत्वेन रसमेवाङ्गीकरोति। विभावादिसंयोजनात्मकः कविव्यापार एव काव्यं तन्मते। काव्ये शब्दार्थयोः रसानुगुणसमुचितं संयोजनं नितरामपेक्ष्यते। तेन व्यक्तिविवेकस्य प्रथमे विमर्शे शब्दस्य विस्तृतं विवेचनं कृतम्। चुरादिशब्द्धातो घञि वा शपि वा प्रत्यये शब्दपदस्य निष्पत्तिः प्रतिपादिता तेन। विवक्षितमर्थं प्रत्याययितुमेव शब्दस्य प्रयोजनं प्रतिपादयता। तेनोक्तम्–

**शब्दप्रयोगः प्रायेण परार्थमुपयुज्यते।**
**नहि तेन विना शक्यो व्यवहारयितुं परः।।**[१]

वाक्यमाध्यमेन हि भावः सम्प्रेष्यते। वाक्यञ्चाकांक्षायोग्यतासन्निधिमत् पदकदम्बम्। शब्दस्तु द्विविधः पदवाक्यरूपत्वात्। पदं पुनः पञ्चप्रकारकम्–

१. व्य. वि. १/३६

नामाख्यातोपसर्गनिपातकर्मप्रवचनीयभेदात्। सत्त्वप्रधानानि नामानि। सत्त्वं नाम सिद्धं वस्तु द्रव्यं वा यथा घटपटादय इति जातिशब्दाः। शुक्लनीलादयो गुणशब्दाः। पाठकपाचकादयः क्रियाशब्दाः। दण्डी विषाणीत्यादयो द्रव्यशब्दाः। अनन्तरं तेन सर्वेषामेव नामपदानां क्रिया एव एका प्रवृत्तिनिमित्तमिति प्रतिपादितम्।

भावप्रधानमाख्यातम्। यत्राख्यातं तिङन्तं वा प्राधान्येन अस्ति, तद् भावस्य क्रियारूपार्थस्य वा वाचाकः। यद्यपि क्रियैकप्रवृत्तिनिमित्तत्वं नामपदानां प्रागुक्तं, तथापि नामपदेषु क्रियारूपोऽर्थः सन्नपि न प्रधानः। आख्यातपदे क्रियाया एव प्राधान्यमिति नामाख्यातयोः परस्परं भेदः।

उपसर्गनिपातकर्मप्रवचनीयानामलोचनाप्रसङ्गं महिम्ना प्रोक्तं यद् एते असत्त्वभूतार्थाः प्रत्येकमप्येतेषु असत्वभूतस्यार्थस्य बोधकम्। उपसर्गनिपात-कर्मप्रवचनीयोत्तरं लिङ्गसंख्यानां योगो न भवति। उपसर्गनिपातकर्मप्रवचनीयानां पारस्परिकं भेदोऽस्ति व्यापारनियमात् प्रयोगनियमाच्च। क्रियां विशेषयितु-मुपसर्गाणां व्यापारः, क्रियाविशेषका उपसर्गा इति। अतएव पाणिनिसूत्रानुसारं क्रियाया अव्यवहितप्रागुपसर्गाः प्रयुक्ता भवन्ति। निपाताश्च भावगत-सत्त्वगतात्मभेदप्रतिपत्तेः हेतवः। समुच्चयप्रभृत्यर्थे निपाताः प्रयुज्यन्ते।

क्रियाविशेषोपजनित-सम्बन्धवच्छेदहेतवः कर्मप्रवचनीया इति कर्मप्रवचनीयस्य लक्षणम्। यद्यपि उपसर्गा इव कर्मप्रवचनीयाः क्रियया सहैवान्विता भवन्ति, क्रियाया अर्थं विशेषयन्ति परन्तु, उपसर्गाः साक्षाद्भावेन क्रियां विशेषयन्ति। कर्मप्रवचनीयास्तु अतिक्रान्तक्रियाक्षणं विशेषयन्ति न तु वर्ममानक्रियालक्षणम्। तस्यातिक्रान्तक्रियालक्षणव्यापारस्य विशेषद्योतनपूर्वकं सम्बन्धावच्छेदनमेव कर्मप्रवचनीयानां कार्यम्।

नामाख्यातोपसर्गनिपातकर्मप्रवचनीया इति वाक्यान्तर्वर्त्तीनि पञ्च पदानि विभिन्नकारणेषु विभक्तानि। वाक्यात् पदानामेतत् पृथक्करणं न वास्तविकं किन्तु, अपोद्धारबुद्धिजनितम्। अखण्डमेव वाक्यं यथार्थतया वाचकम्। असत्यभूतोऽपि पदोद्धारः शास्त्रप्रक्रियायां व्युत्पाद्यशिष्याणां बोधसौकर्यार्थमेव कल्पितः।

**वाक्यस्वरूपम्-**

महिमभट्टमते हि द्विविधः शब्दो वाक्यार्थविचारदृष्ट्या पदवाक्यभेदात्।

तेनोक्तं यत् वाक्यमेकप्रकारं, क्रियाप्राधान्यात्। यथाहुः

**साकांक्षावयवं भेदे परानाकांक्षशब्दकम्।**
**क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते।।**[१]

एकस्मिन् वाक्ये एकं तिङन्तं पदम् अपराणि सुबन्तानि पदानि भवन्ति। अतः प्राचीनैः वाक्यलक्षणं कृतं यत्–एकतिङ् वाक्यम्। केवलं नामपदैः वाक्यं न सम्भवति नामाख्यातञ्च (क्रियाकारकञ्च) इत्युभयोः पदयोः समावेशेन वाक्यता समुपजायते। क्रियापदस्य प्राधान्यं भवति, अतः क्रियापदं विशेष्यं कारकपदञ्च विशेषणं क्रियां प्रति तस्य गुणीभूतत्वात्। अतः नामाख्यातादिपदसमूहात्मकवाक्ये आख्यातं प्रधानम्। नामपदं सिद्धार्थाभिधायकं सत्त्ववाचकम् आख्यातपदञ्च साध्यार्थाभिधायकं अतस्तेनोक्तं यत् नामाख्यातपदसमूहो वाक्यम्।

(१) अत एव वाक्यस्य विश्लेषणे पदसमूहः साकाङ्क्षःपरस्परान्वितत्त्वेन विवक्षितार्थे पदानां पर्यवसानं भवति।
(२) पदसंघातोऽविभक्तावस्थायां पदसंघातशब्दान्तरं न आकाङ्क्षति।
(३) आलोच्यपदसमूहेन बोधितेर्थे क्रियाया प्राधान्यं भवति।
(४) पदसमूहः गुणविशिष्टः– गुण इति कथनेन क्रियां प्रति कारकमिति विशेषणं भवति।
(५) वाक्यरूपेण परिगणनीयः पदसंघातः एकप्रयोजको भवति अत एव पदसंघातस्य प्रयोजनम्– आख्यातवाच्यप्रधानभूतक्रियायाः अर्थप्रका-शनार्थम्।

## सर्वो हि शाब्दव्यवहारः अनुमानात्मकः

महिमभट्टेन प्रतिपादितं यत् सर्वविधः शाब्दव्यवहारः अनुमानात्मक एव साध्यसाधनगर्भत्वात्। शब्दस्याभिधातिरिक्तं व्यापारान्तरं नास्ति। दार्शनिकाः शब्दमतिरिक्तप्रमाणत्वेनाङ्गीकुर्वन्ति। वाक्यं हि शब्दप्रमाणादेव श्रोतुश्चित्ते अनुभवविशेषरूपं शाब्दबोधं जनयति। अतः नैयायिकाः प्रत्यक्षमनुमानमुपमानं शब्दश्चेति प्रमाणचतुष्टयमङ्गीकुर्वन्ति। बौद्धाः वैशेषिकाश्च प्रत्यक्षमनुमानञ्च

१. व्य. वि. १.२० वृ.

प्रमाणद्वयमङ्गीकुर्वन्तः शब्दमुपमानञ्च प्रत्यक्षानुमानयोरन्तर्भावयन्ति। अत एव वाक्यश्रवणादनन्तरं जायमानं ज्ञानमनुमानात्मकमेव तेऽङ्गीकुर्वन्ति।

यदा प्रथमो वक्ता 'गामानय' इति व्याहरति तदा यमुद्दिश्य वाक्यमुच्चारयति स श्रोता तद्वाक्यं श्रुत्वा गावानयनकर्मणि प्रवृत्तो भवति। यदा 'गामानय' इति वाक्यस्यार्थबोधः श्रोतुश्चित्ते उदेति तदा गवानयकार्यं प्रति श्रोतुः प्रवृत्तिर्जायते। प्राथमिकोऽयं शाब्दबोधः सम्प्रत्यात्मको भवति। यदा शाब्दबोधस्यास्य अप्रामाण्यं भवति तदा श्रोता कर्मणि न प्रवृत्तो भवति। अर्थात् कर्मनिवृत्तिं प्रति अप्रामाण्यबुद्धिरेव तत्र कारणायते तथा कर्मप्रवृत्तिं प्रति प्रामाण्यबुद्धिः। अनेन निष्कर्षोऽयं जनितो यत् कर्मणि प्रवृत्तिं निवृत्तिञ्च प्रति यथाक्रमं प्रामाण्यबुद्धिः (सम्प्रत्ययः)अप्रामाण्यबुद्धिः (असम्प्रत्ययः) च कारणम्। अनुमाने यथा धूमरूपिणः कार्यात् बह्निरूपकारणस्यानुमानं भवति। कारणस्य व्यापकत्वात् कार्यस्य च व्याप्यत्वात्। तथैव शाब्दबोधस्थलेऽपि श्रोतुः प्रवृत्तिकार्येण वा तस्य चित्ते कारणीभूतसम्प्रत्ययस्य अथवा कारणीभूता-सम्प्रत्ययस्य सहभावः सिध्यति। प्रवृत्तिं वा निवृत्तिं प्रति यथा श्रोतुः समप्रत्ययो वा असम्प्रत्ययो वा कारणं तद्वत् सम्प्रत्ययात्मकः असम्प्रत्यात्मको वा बोधोऽपि युक्त्या प्रतिष्ठितो भवति। युक्तिमात्रं हि साध्यसाधनभावात्कमकमेव। अतः सिद्धान्तोऽयं निष्पद्यते यत् वाक्यश्रवणाज्जायमानः शाब्दबोधो युक्तिगर्भः साध्यसाधनगर्भो वा। साध्यसाधनभावस्तु अनुमितेराधारः। अतः सर्वविधो हि शाब्दबोधः अनुमानात्मक एव। फलतः प्रवृत्तिनिवृत्तिमूलको हि निखिलः शाब्दव्यवहारःअनुमिति-स्वरूप एव।

तत्र ध्येयमिदमस्ति यत् साध्यसाधनविभागकल्पनमेतत् वाक्या-न्तर्गतपदसमूहे एव सम्भवति न तु पदार्थे। पदार्थस्तु निर्विभाज्यो भवति। महिमभट्टस्य पदवाक्यभेदात् शब्दस्य द्वैविध्यप्रतिपादने इदमेव रहस्यं यत् पदात् पदार्थो वाक्याच्च वाक्यार्थः परिस्फुरति। तत्र तेन वाक्यार्थे साध्यसाधन-भावसत्तां प्रदर्शयितुं क्रियाप्राधान्यपक्षः समुपस्थापितः। क्रियायाः साध्यत्वात् वाक्ये प्राधान्यम्। ततोऽवशिष्टानि पदानि प्रधानक्रियायाः साधनरूपेण तिष्ठन्ति। एवं तत्र वाक्यार्थे तेन साध्यसाधनतां सम्प्रदर्श्य अनुमानप्रक्रिया एव प्रतिष्ठापिता सुतराम्।

**अर्थस्वरूपनिरूपणम्**

ध्वनिवादिभिरालङ्कारिकैः वाच्यो लक्ष्यो व्यङ्ग्य इति त्रिविधोऽर्थः शब्दस्य प्रतिपादितः। किन्तु महिमभट्टेन सिद्धान्तममुं विदूष्य केवलं वाच्योऽनुमेयश्च द्विविधोऽर्थः स्वीकृतः। वाच्यार्थस्तु प्रसिद्ध एव यस्य प्रतीतिः शब्दस्याभिधाव्यापारेण भवति।

**श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते।**
**तं मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितम्॥**[1]

मुख्यार्थस्य प्रतीतिः शब्दोच्चारणमात्रेण निमित्तान्तरमनपेक्ष्यैव भवति। शब्दस्य एक एव व्यापारः स चाभिधाख्यः। अभिधाव्यापारेण प्रतीयमान एवार्थः अभिधेयार्थः। मुख्यार्थो वाच्यार्थश्च संज्ञान्तराणि। अन्यः सर्वोप्यर्थः गौण एव। तेषामर्थानाम् अभिधया बोधितेन मुख्यार्थेन सह सम्बन्धवशात् प्रतीतिरिति ते सर्वेऽपि अनुमानरूपाः। महिमभट्टेन लक्ष्यव्यङ्ग्यार्थयोः अनुमापक-शक्त्यागतार्थता सिद्धान्तिता। अर्थान्तरप्रत्ययो वाच्यार्थस्य सामर्थ्यादेव भवति। सम्बन्धाभावेऽर्थान्तरप्रतीतिरसम्भवा। अतः यदि सम्बन्धादर्थान्तरप्रतीतिरभ्युपगता तर्हि तन्नानुमानबाह्येति महिम्नः प्रतिपत्तिः।

ध्वनिसम्प्रदाये लक्षणव्यापाराङ्गीकारेऽपि मुख्यार्थेन सह तस्य सम्बन्धोभ्युपगतः। अभिधापुच्छभूता लक्षणेति तेषां दर्शनम्। अतो महिमभट्टमते लक्षणा न कापि शब्दशक्तिः पृथक्कल्पनीया, अनुमानान्तर्भूतत्वात्। लक्ष्यार्थः अनुमेयार्थ एव। ध्वनिवादिभिर्या व्यञ्जना शक्तिः शब्दार्थोभयवृत्तित्वेन कल्पिता सापि अर्थस्यानुमापकत्वरूपा, तद्भिन्ना न काऽपि अभिधातिरिक्तरूपा शब्दशक्तिः। यो ह्ययं लक्ष्यार्थो वाच्यार्थो वा परिकल्प्यते आलङ्कारिकाणां निकाये स तु वाच्यार्थेन सम्बन्धवशात् वाच्यार्थात् अथवा वाच्यानुमितार्थान्तरादवसीयते तत्र वाच्यार्थो वाच्यानुमितोऽर्थो वा अर्थान्तरानुमितिं प्रति लिङ्गत्वेन हेतुत्वेन, साधनत्वेन वा स्वीकरणीयोऽवश्यमेव। अनुमेयार्थोऽयं त्रिविधः वस्तुमात्रम् अलङ्कारो रसादिश्च। तत्र वस्तुमात्रम् अलङ्कारश्च कदाचित् अभिधाशक्ति-

१. व्य. वि. १.२० वृ.

वेद्योऽपि भवति किन्तु रसादिस्तु सर्वदाऽनुमेय एव न कदापि अभिधावेद्य इति महिमभट्टस्य प्रतिपत्तिः। महिमभट्टेन ध्वनिकारसम्मतस्त्रि-विधोऽपि व्यङ्ग्यार्थः यथाशक्ति अनुमेयार्थेऽन्तर्भावितः। तेषाञ्चमत्कारातिशये नास्ति महिम्नः काऽपि विप्रतिपत्तिः। व्यञ्जना केवलं तेन विप्रतिपन्ना। वस्तुनोऽलङ्कारस्य च तेनोभयं वाच्यत्वमनुमेयत्वञ्च प्रतिपादितं तथैव यथा ध्वनिकारेण तस्य वाच्यत्वं व्यङ्ग्यत्वञ्चाङ्गीकृतमासीत्। रसादेस्तु पुनः न स्वप्नेऽपि वाच्यता प्रत्युत अनुमेयार्थतैव नित्यमिति महिमभट्टस्य सिद्धान्तसारः।

महिमभट्टेन प्रतिपादितं यद् अखण्डं वाक्यमेव वाचकं भवति। वाक्यात् पदानां प्रविभागो न वास्तविकः अपितु अपोद्धारबुद्ध्या क्रियते। पदानामयं विभागोऽसत्यभूतोऽपि प्रतिपत्तिसौकर्याय भवति। एषां परस्परमुद्देश्यविधेय-रूपेणान्वयो भवति। उद्दश्ये वाक्यतात्पर्यं न भवति विधोयांशस्तु वाक्य-तात्पर्यविषयीभूतो भवति। फलतः विधेयांशस्य प्राधान्यं वाक्ये स्वतः जायते। सिद्ध उद्देश्यांशः असिद्धविधेयांशस्थले शुद्धो विध्यनुवादभावो भवति। अर्थात् तत्रोपपादनं नापेक्षते। यथा कुमारसम्भवस्य पद्यमिदम् उदाहृतं महिमभट्टेन।

**अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।**
**पूर्वापरौ तोयनिधीवगाह्य स्थितः पृथिव्या इव मानदण्डः।।**

इत्यत्र देवतात्मा नगाधिराजो हिमालयः अनुवाद्यो वा उद्देश्यम्। 'अस्ति' इति पदेन तस्यास्तित्वं विधेयं वा साध्यम्। देवतात्मनो हिमालयस्य अस्तित्वं सुप्रसिद्धमेव तत्रोपपादनं न अपेक्षते। तन्मते साध्यसाधनभावो द्विप्रकारको भवति। अतिप्रसिद्धत्वादुपपादननिरपेक्षः सापेक्षश्च। तत्रोपपादकोपादनापेक्षः साध्यसाधनभावोऽपि द्विविधः शाब्दः आर्थश्च। उपपादकस्य साधनत्वं हेतुत्वं वा यत्र शब्देन बोध्यते तत्र शाब्दः साध्यसाधनभावः। यत्र चोपपादकस्य साधनत्वमर्थपर्यालोचनया बोध्यते तत्रार्थः। साध्यसाधनभावः पदवाक्यार्थरूपतया द्विधा भवंश्चायं शाब्दार्थसाध्यसाधनभावं चतुर्धा भवति। पदार्थो हि पदार्थान्तरं प्रति हेतुत्वं भजते वाक्यार्थो वा वाक्यार्थन्तरं प्रति, इति पूर्वं विधेयस्य असिद्धौ उपपादनापेक्षत्वम्। पदार्थस्य तु जातिगुणक्रियाद्रव्यरूपेण चतुःप्रकारत्वं तथाभूतस्य च यथासम्भवम् अनुभयरूपत्वेन धर्मधर्मित्वेन च भेदाः। धर्मस्यापि

सामानाधिकरण्यवैयधिकरणाभ्यां द्वैरूप्यम्। सामानाधिकरण्ये विशेषद्वारेण हेतुत्वादार्थः साध्यसाधनभावः। वैयधिकरण्ये तु शाब्दः पञ्चम्यादिना हेतुत्वेन उपादानात्। वाक्यार्थस्य कारकवैचित्र्याद् वैचित्र्येऽपि क्रियैकत्वादेकरूपत्वम्। तत्र यथादिशब्दानां हेतुत्वप्रकाशकानां प्रयोगे वाक्यार्थगतः शाब्दः साध्यसाधनभावः एवञ्चोपपादकोपादनापेक्षः साध्यसाधनभावः पदार्थवाक्यार्थयोः प्रत्येकं शाब्दत्वार्थत्वभेदेन चतुर्विधः सन् बहुविधः प्रपञ्चितः। निखिलस्य चास्य साध्यसाधनभावस्य प्रमाणसिद्धौ लोको वेदः प्रत्यक्षमिति त्रिविधं प्रमाणं तेन प्रदत्तम्।[१]

**लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्।**

**व्यञ्जनाव्यापारखण्डनम्**

महिमभट्टः ध्वनिसिद्धान्तं प्रत्याख्याय स्वीयमनुमितिवादं सिद्धान्तयति। ध्वनिसिद्धान्तस्य प्राणभूतां व्यञ्जनाशक्तिमेवोत्पाटयितुं तेन प्रबलः प्रहारः कृतः। सर्वप्रथमं तेन व्यङ्ग्यव्यञ्जकभाव एव खण्डितः। उक्तञ्च तेन यत् 'तथा हि सतोऽसत एव वार्थस्य प्रकाशमानस्य सम्बन्धस्मरणानववेक्षिणा प्रकाशकेन सहैव प्रकाशविषयतापत्तिरिति तल्लक्षणमाचक्षते। सदसद्विषयेणाभिव्यक्तिः द्विविधा भवति। तत्र सतस्त्रिविधा।

(क) दधिवृक्षादयः पदार्थाः पूर्वं कारणात्मनि पयोबीजादौ तिरोहिताः सन्तस्तिष्ठन्ति। कारणावस्थायां विद्यमाना इन्द्रियविषयतामनापन्नास्ते पदार्थाः व्यक्तावस्थायामेव इन्द्रियग्राह्याः भवन्ति। तथैव कारणदशायां तिरोभूतानां पदार्थानां कार्यदशायां विपरिणामतः इन्द्रियगोचरत्वापत्तिः सद्व्यक्तेः प्रथमो भेदः।

(ख) कार्यावस्थायां विद्यमानानां पदार्थानां तमसाछन्नानां प्रकाशकेन दीपकादिना सहैवाभिव्यक्तिरिति द्वितीयो भेदः।

---

१. व्य. वि. १.२० वृ.

(ग) अनुभूतपूर्वाणां पदार्थानां संस्कारात्मना पतिपत्तुर्मनसि विद्यमानानां तेषां प्रबोधकान्तरेण प्रत्यायनमेव तृतीयो भेदः। अयमपि प्रबोधकभेदात् त्रिविधः। प्रथमः प्रबोधको नान्तरीयकं धूमादि। यथा–धूमादग्निज्ञानम्। द्वितीयः प्रबोधकः सदृशवस्त्वन्तरम्। यथा–सदृशवस्तवन्तरेण प्रतिबिम्बलेख्यादिना प्रबोधकेन प्रतिबिम्बिनः प्रबोध्यस्य प्रत्ययः। तृतीयः प्रबोधकः वाचकशब्दः। अर्थात् प्रबोधकात् वाचकाच्छब्दात् संस्कारप्रबोधः। इत्थं तृतीयाभिव्यक्तेस्त्रैविध्यम्।

असद्विषया या अभिव्यक्तिः सा त्वेकैव। तद्यथा प्रावृट्कालेऽसतामेवेन्द्रधनुरादीनामाकाशे बोधः एवमभिव्यक्तेः सकलं रूपं समुपस्थाप्य महिमभट्टो ब्रूते यद् एतासु व्यक्तिषु कतमा अभीष्टा व्यक्तिवादिनाम्। न तावत् सद्विषया यतो हि तत्र प्रथमे भेदे व्यङ्ग्ययार्थस्याभिव्यक्तिर्दधिवृक्षवन्नास्ति समुपकल्पिता। द्वितीयभेदेऽपि व्यङ्ग्यार्थस्य व्यक्तिर्न सम्भवति व्यङ्ग्यार्थस्य प्रकाशस्य व्यञ्जकेन प्रकाशकेन सहैवाप्रकाश्यत्वात्। यथा सम्बन्धस्मरणादिकमनपेक्ष्य दीपेन घटो ज्ञायते न तथा वाच्यार्थेन व्यङ्ग्यार्थोवगम्यते। प्रत्युत प्रथमक्षणे वाच्यार्थबोधः ततः परं तत्सम्बन्धेन व्यङ्ग्यार्थोऽवसीयते सिद्विषयाया अवशिष्टे तृतीये भेदे यदि व्यङ्ग्यार्थस्य व्यक्तिः तदा व्यक्तेः स्वरूपमनुमानात्मकमेव। लिङ्गादनुभूतपूर्वस्य संस्कारात्मनान्तर्विपरिवर्त्तिनोऽर्थान्तरस्य या प्रतीतिः सा अनुमानात्मिकैव। यथा लिङ्गेन धूमेन लिङ्गिनो वह्नेर्ज्ञानमनुमानमूलमेव तथैव गमकेन वाच्यार्थेन प्रतिपद्यमानो गम्योऽर्थः प्रतीयमानोऽपि अनुमेय एव।

असद्विषया अभिव्यक्तिर्न कदापि लक्ष्ये ध्वनौ संघटते व्यङ्ग्यार्थस्यासद्विषयत्वस्य वक्तुमशक्यत्वात्।

महिमभट्टमते शब्दस्य एक एव व्यापारः स च अभिधाव्यापारः। अन्यः सर्वोऽपि व्यापारः अर्थतः कार्यकारणभावमुपजीव्य प्रवर्तमानोऽनुमितिमूलक एव। तन्मते रसानुभूतिरपि साध्यसाधनभावमूलैव। स तु विभावादीनां कारणत्वेन रसादीनां कार्यत्वेन तत्र क्रमभावं प्रदर्शयति। यथा कारणात् कार्यप्रतीतिः क्रममूलैव भवति तथैव रसप्रतीतौ क्रमभावोऽस्ति। अतः रसप्रतीतावपि साध्यसाधनभावमूलानुमितिरेव न पुनर्व्यङ्ग्यव्यञ्जकमूलो ध्वनिः।

उदाहरणेन व्याख्यातं तेन।

**भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण।**
**गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण॥**

अत्र निषेधरूपि व्यङ्ग्यवस्तु प्राधान्येनाङ्गीकृतं ध्वनिवादिभिः किन्तु तत्सर्वमनुमाने अन्तर्भावितं महिमभट्टेन। तत्र त्रिरूपाल्लिङ्गात् लिङ्गिज्ञानमनुमानमिति लक्षणात्। अनुमितेः द्वे अङ्गे पक्षधर्मता, व्याप्तिश्च। पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वेन अनुमितेः त्रिरूपाणि लिङ्गानि। अन्वयव्यतिरेकाभ्यां लिङ्गलिङ्गिनोरविनाभावः सिध्यति। अविनाभाव एव व्याप्तिः अन्वयव्यतिरेकात्मकसपक्षसत्त्वविपक्षसत्त्वरूपया अनया व्याप्त्या हेतोः शुद्धत्वं निश्चितं भवति। तेन चादुष्टेन हेतुना नियतस्य साध्यस्य पक्षे सिद्धिः।

उपर्युक्तपद्ये गोदावरीतटे पक्षे दृप्तसिंहसद्भाववत्त्वेनोपात्तेन हेतुना साध्यो लिङ्गी सन्ननुमेय एव। अत्र चौर्यरतिसुखलुब्धया शुनो भीतः कश्चित् धार्मिकः विधिमुखेन निःशङ्कं भ्रम इत्यादिष्टः यतो हि भयकारणभूतः श्वा तत्तटवासिना दृप्तसिंहेन मृत्युं प्रापितः। अतो भयकारणस्य शुनोऽभावात् धार्मिकस्य भ्रमणं निष्कण्टकं जातमिति पुंश्चल्या वचनम्। वस्तुतः तदभिसरणस्थानं धार्मिकविहरणविरहितं भवेदिति तस्याः साध्यम्। अतः शुनो भीतो धार्मिको दृप्तसिंहसद्भावश्रवणादवश्यमेव तस्यः सङ्केतस्थानभ्रमणात् पराङ्मुखो भविष्यतीति विधिमुखेन तया भीरुधार्मिकः गोदावरीतटभ्रमाणान्निवार्यते।

अत्र तन्मते अनुमेयत्वमेवोपपन्नं भवति। तथाहि– यद् यद् भीरुभ्रमणं तत् तत् भयकारणनिवृत्त्युपलब्धिपूर्वकम्। गोदावरीतटं च भयकारण–सिंहाधिष्ठितम् अतस्तत् श्वभीरुभ्रमणायोग्यम् इति। अत्र भ्रमणस्य यद् व्यापकं भयहेतुनिवृत्तिज्ञानं तद्विरुद्धा भयकारणसिंहोपलब्धिः भ्रमणारूपं व्याप्तं निवारयति। अत्र गोदावरीतटं पक्षः दृप्तसिंहसद्भावो हेतुः भ्रमणाभावस्तु साध्यः। अनुमितेः पञ्चावयवं वाक्यं भवति।

१. अयं देशो भीरुभ्रमणायोग्यम्। प्रतिज्ञावाक्यम्।
२. दृप्तसिंहसद्भावत्वात्। हेतुः।

| | |
|---|---|
| ३. आरण्यमिति। | दृष्टान्तः |
| ४. तद्यथेति। | उपनयः। |
| ५. तस्मात्तथेति। | निगमनम्। |

अनया दिशा सर्वत्र ध्वनिदृष्टान्तेषु व्यङ्ग्यार्थस्यानुमेयत्वं सिध्यति महिमभट्टमते। तन्मते प्रतीयमानार्थस्य प्रधानगौणभावः सर्वथा असम्भवः। अतएवोत्तमकाव्ये यः प्रतीयमानार्थः अनुमीयमानः प्रधानो भवति स एव प्रतीयमानः गुणीभूतः सन् मध्यमकाव्येऽपिचारुत्वाधायको भवति। काव्स्य चारुत्वं प्रतीयमानाश्रितमेव भवत्युभयत्र। अतः प्रधानगुणभावेन न किमपि पार्थक्यं युक्तियुक्तमिति तस्य सिद्धान्तः।

**ध्वनिवादिनां पक्षतः महिमभट्टस्य अनुमितेः मीमांसा–**

ध्वनिवादिनो ब्रुवते यत् सर्वत्र ध्वनिस्थले या लिङ्गलिङ्गिभावप्राणा अनुमितिः सिद्धान्तिता सा न समीचीना। ध्वनिवादिनां निकाये अभिव्यक्तेः यद्रूपं स्वीकृतं तन्नास्ति तथा यथा महिम्ना प्रदर्शितम्। तत्रापि व्यङ्ग्यव्यञ्जकयोः निमित्तनैमित्तिकभावो ध्वनिवादिभिरपि अङ्गीक्रियते किन्तु नायमनुमितिरूपः यतो हि व्यङग्ये प्रतीयमाने सत्यपि न वाच्यबुद्धिः दूरीभवति, वाच्याविनाभावेन तस्य प्रकाशनात्। अविनाभावस्तु सम्बन्धमात्रार्थेनेष्टोत्र।

'भम धम्मिय...'। इत्यत्र वस्तुध्वनेरनुमेयत्वं यत् प्रोक्तं महिमभट्टेन तदपि नानुमित्यनुकूलम्। निर्दुष्टेन हेतुना नियतस्य साध्यस्य पक्षे सिद्धिर्भवति न पुनः दुष्टेन हेतुना। महिमभट्टेन चात्र दुष्टेन हेतुना अनुमितिः प्रदर्शिता न तु निर्दुष्टेन हेतुना। तदित्थं व्याख्यातं व्यञ्जनाविमर्शकारेण–

हेतुत्वञ्चानुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशब्दज्ञानजनकसाध्या-विषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम्। यथा–पर्वतादिपक्षकवह्न्या-दिसाधकस्थले धूमादिः। यत्र हेतोर्हेतौ वा आभासः स हेत्वाभास इति व्युत्पत्त्या हेत्वाभासपदस्य हेतुदोष इत्यर्थः। स चानुमितिकारणीभूताभावप्रतियोगि-यथार्थज्ञानविषयरूपः। यथा– ह्रदो वह्निमान् धूमादित्यस्मिन्नुदाहरणवाक्ये वह्निमान्

वह्निव्याप्यधूमवांश्चेत्याकारकानुमितेः कदाचिदप्यनुदयात्। एवं ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववत् ह्रदादिरूपो दोषो हेत्वाभासः।

अयं देशः भीरुभ्रमणायोग्यः दृप्तसिंहसद्भाववत्वादित्यस्मिन्ननुमाने दृप्तसिंहसद्भावरूपः साध्यस्य भीरूभ्रमाणाभावस्यानुमापको हेतुरनैकान्तिको हेत्वाभासः। सव्यभिचारोऽनैकान्तिकः । यथाहि–नित्यः शब्दः प्रमेयत्वात्। अत्र हि प्रमेयत्वं हेतुः। स तु नित्यानित्यवृत्तिः। प्रमेयत्वं नित्येषु अनित्येषु उभयत्र वर्तते इति भावः। पूर्वप्रतिपादितस्यानुमानाकारस्य दुष्टहेतुवशाद्धेत्वा–भासाकारस्तु निम्नलिखितप्रकारेण बोध्यः। अयं देशो भीरुभ्रमणायोग्यो दृप्तसिंहसद्भावादित्यनुमितौ राजाज्ञया अन्येन केनचिद् वा कारणेन दृप्तसिंहसद्भावेऽपि भीरुभ्रमणयोग्यतायाः सम्भवादनैकान्तिको हेत्वाभासः। पूर्वप्रतिपादिते व्याप्तिस्वरूपे हेतुदोषसङ्गमनं यथा–यत्र यत्र दृप्तसिंहसद्भावस्तत्र तत्र भीरुभ्रमणायोग्यत्वमित्यस्या अन्वयव्याप्तेः राजाज्ञया दूषितत्वात्। अपि च पूवोक्तेऽनुमानशरीरे दृप्तिसिंहसद्भावरूपो हेतुर्विरुद्धोऽपि, अस्पर्शत्वादेर्हेतोः शुनो बिभ्यतोऽपि धार्मिकस्योत्साहवशात् मृगायादिकुलतूहलेन वा दृप्तसिंहसद्भाववति गोदानदीतटे भ्रमणसम्भवात्। गोदावरीतीरे दृप्तसिंहसद्भावरूपो न प्रत्यक्षप्रमाणेन सिद्धः। पुंश्चल्या वचनमेव तत्र प्रमाणम्। न च तद्वचनं सर्वथा सत्यम्। सुरतसुखविघ्नकोपाकुलायास्तस्या वचनेऽविश्वासात्। अतो गोदातटं भीरुभ्रमणायोग्यं दृप्तसिंहसद्भावादित्यनुमाने ऽसिद्धो हेत्वाभासोऽपि दृश्यते। एवञ्च यद्भीरुभ्रमणं तद्भयकारणनिवृत्त्युपलब्धिपूर्वकमिति व्यतिरेकव्याप्तेः दूषितवादनुमानशरीरं सर्वथा दुष्टम्। तत एव भीरुभ्रमणाभावो व्यङ्ग्य एव नत्वनुमेयः।

किञ्च लिङ्गात् यल्लिङ्ग्यनुमीयते, अस्मै सर्वदा नियत एव। धूमादनुमीयमानोग्निस्तदुत्पत्तिसम्बन्धात् सदा नियतरूपः। परं व्यङ्ग्योऽर्थो न सदा नियतः। नापि च तत्प्रत्यायको वाच्योऽर्थस्तेन सह सदा नियतसम्बद्धःपरन्तु वक्तृबोद्धव्यकाक्वादीनामुपाधीनां बलादनुभूयमानो व्यङ्ग्योऽर्थ औपाधिकः सन्ननियतसम्बन्धोऽपि दृश्यते। अत एव 'सूर्योऽस्तं गतः' इत्यत्र नियताद् वाच्यार्थादुपाधिभेदेन अनियता अनवधयोऽर्था अवभासन्ते। यदि

व्यङ्ग्योऽर्थोऽनुमेय एव स्यात्तदा धूमाद् यथा वह्निज्ञानं नियतं तथा प्रस्तुताद् वाक्यादपि नियतस्यैवार्थस्य प्रतीतिः संभवेत्। परं 'गावः संह्रियन्ताम्' दूरं मा गा:' इत्यादयोऽनवधयोऽर्था वक्तृबोद्धव्यादीनामुपादीधीनां महिम्ना बोद्धरि बोद्धरि भासन्ते। नहि 'सूर्योऽस्तं गतः' इत्यस्य वाक्यस्य 'गावः संह्रियन्ताम्'इत्येतावानेव नियतोऽर्थः येन तस्यानुमेयत्वं स्यात्। प्रत्युत पूर्वोक्तदिशा वक्तृबोद्धव्यवैशिष्ट्यमहिम्ना असंख्या अर्थाः परिस्फुरन्ति। अपि च व्यङ्ग्योऽर्थो यद्यनुमेयः स्यात्तदा शब्दार्थविषये मिथ्या विवादा एव न प्रवर्त्तेरन्। सर्वस्यार्थस्यानुमेयत्वेन नियतत्वात्। अतस्तुरीयस्यार्थस्य व्यङ्ग्यत्वं सर्वथा सिद्धम्।'

महिमभट्टेन यत् प्रधानव्यङ्ग्यगौणव्यङ्ग्याभ्यां प्रतिपन्नः काव्यस्योत्त-ममध्यमविभागो विप्रतिपन्नस्तदपि नोचितम्। यद्यपि अखण्डास्वादविषयः काव्यार्थ इति सर्वसम्मतः सिद्धान्तः किन्तु क्वचित् प्रतीयमानः भृत्यतुल्यं वाच्यार्थमुपस्कुर्वाणः सन् गुणीभावमाप्नोति। क्वचिच्च मूर्धाभिषिक्तभूपति-वदुपस्कार्यः सन् प्रधानभावेनावस्थितो भवति। अतः प्रतीयमानस्य प्राधन्येनावस्थानात् ध्वनिकाव्यं गौणभावेन चावस्थानात् गुणीभूतव्यङ्ग्यमेव काव्यं भवति। अतः प्रतीयमानस्य चारुत्वानुभूतिभेदात् ध्वनिगुणीभूतव्यङ्ग्याभ्यां भिन्नं काव्यं सहृदयहृदयानुभवसिद्धमेव। तस्यैव चोत्तममध्यमव्यपदेशः साहित्यसम्प्रदाये ध्वनिवादिभिः कृतः।

उपर्युक्तविवेचनया निष्पद्यते यद् अनुमितिवादिना महिमभट्टेन ध्वनिसिद्धान्तप्राणभूतायाः व्यञ्जनावृत्तेः समूलमुन्मूलनाय अत्युग्रं प्रयतितम्। तेन शब्दस्याभिधामात्रैकव्यापारमङ्गीकृत्य अन्यः सर्वोपि व्यापारोऽर्थाभ्य-न्तरीकृत्य व्यञ्जना प्रत्याख्याता। यद्यपि प्रतीयमानार्थेषु नासीत् तस्य कापि विप्रतिपत्तिः। काव्ये रसस्य तथैव प्राधान्यं तेनोरीकृतं यथा ध्वनिवादिभिः। वस्त्वलङ्कारध्वनी तेनापि स्वीकृतौ किन्तु सर्वोऽयं चमत्कारातिशयः अनुमितिद्वारैव न पुनः व्यङ्ग्यञ्जकभावेनेति तस्य सिद्धान्तसारः। व्यञ्जनायाः प्रत्याख्यानमेव तस्य मुख्यमुद्देश्यमासीत्। ग्रन्थारम्भे एव तेन तत्सङ्कल्पितमासीत्। वाच्यार्थादर्थान्तरप्रतीतौ साध्यसाधनभावमुपकल्प्य तेनाविष्कृतमनुमितेर्यद् वितानं

तत् तत्रैव तस्य ग्रन्थे सङ्कुचितम्। महिमभट्टस्य ध्वनिवादिभिः सह मुख्यतो व्यञ्जनामेवादाय विरोधः प्रचलितः। उभयोः विरोधाविराधौ निम्नलिखित-रूपेणाऽऽकलयितुं शक्येते।

## तयोरविरोधः

१. काव्यास्यात्मा प्रतीयमानार्थः।

२. प्रतीयमानार्थः वस्त्वलङ्काररसरूपस्त्रिविधः।

३. रसः स्वप्नेऽपि न वाच्यः।

४. कविप्रतिभापरिगृहीता भावाः काव्यसौन्दर्यसम्पादकाः।

## तयोर्विरोधः।

| | आनन्दवर्धनाचार्यमते | महिमभट्टमते |
|---|---|---|
| १. | प्रतीयमानार्थस्य व्यङ्ग्यत्वम्। | तस्य अनुमेयत्वम्। |
| २. | प्रतीयमानार्थप्रतिपादिका व्यञ्जनावृत्तिः। | अनुमितिः |
| ३. | शब्दस्य व्यञ्जकत्वमपि सम्भवति। | वाचकत्वमेव भवति। |
| ४. | प्रतीयमानार्थस्य प्राधान्याप्राधान्येन काव्यस्य द्विविधो भेदः। | नायं युक्तियुक्तः। |

एवंविधविवेचनया स्पष्टं निष्पद्यते यत् महिमभट्टः सूक्ष्मेक्षिकया ध्वनिसिद्धान्तं समीक्षते। तस्य समीक्षणमिदमतीवपाण्डित्यपरं साहित्य-शास्त्रेऽपूर्वञ्च किन्तु यशःप्राप्तिकामनाया कृतमिदं शुष्कतर्ककर्कशधीग्राह्यं समीक्षणं नानुरञ्जयति काव्यास्वादविदग्धान् सुधियः। अतो हेतोः परवर्त्तिभिरालङ्कारिकैः न समादृतोऽनुमितिवादोऽयं महिमभट्टस्य।

## भोजदेवः (१०१० ई० तः १०५५ई०)

साहित्यशास्त्रपरम्परायां भोजदेवः शृङ्गारप्रकाशसरस्वतीकण्ठा-भरणनाम्नोः ग्रन्थयोः संग्रथनान्नितरां प्रसिद्धोस्ति। सर्वप्रथमं हेमचन्द्राचार्यः स्वकीये 'काव्यानुशासम्'-इतिग्रन्थे भोजदेवं स्मरति। हेमचन्द्राचार्यस्तु ईसवीयसंवत्सरस्य १२ शतके समुत्पन्न इति सर्वविदितं तथ्यम्। भोजदेवोऽपि १० शतके वर्तमानं

काव्यमीमांसाकारं राजशेखरं सादरम् उल्लिखति। साहित्यसमीक्षकोऽयं भोजदेवः तथा परमारवंशीयो धाराधराधीशो भोजदेवस्त्वेक एवेति पण्डितानां प्रतिपत्तिः। अयमेवार्थः कविकल्हणस्य निम्नलिखितेन पद्येन पुष्टिं भजते।

**स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ।**
**सूरी तस्मिन् क्षणे तुल्यं द्वावास्तां कवि-बान्धवौ।।**

अयं भोजराजः सिन्धुराजस्य पुत्रः वाक्पतिराजस्य च भ्रातृज आसीत्। समुपलब्धान् शिलालेखान् आधृत्य ऐतिह्यविदो भोजदेवस्य जीवनकालम् ईस्वीयसंवत्सरस्य १०१०ई० तः १०५५ ईं यावत् प्रतिपादयन्ति।

मालवमहीमहीशस्य शृङ्गारप्रकाशसरस्वती-कण्ठाभरणनामनी काव्यालङ्काररत्ने प्रसिद्धे वर्तेते। भोजदेवेन प्रायः ८० ग्रन्थाः प्रणीताः विविधेषु विषयेषु। सरस्वतीकण्ठाभरणनामकोऽन्योपि ग्रन्थो व्याकरणविषयकोऽस्ति प्रकाशितो मद्रासविश्वविद्यालयतः।

शृङ्गारप्रकाशः सर्वोत्कृष्टस्तेषु प्रणयनेषु तत्र ३६ प्रकाशाःसन्ति। प्रथमोऽष्टमं यावत् शब्दार्थविवेचनं वर्तते। भोजदेवस्याविर्भावः साहित्यशास्त्रे तदा संजातो यदा ध्वनिविरोधिस्वरोऽतीवमुखर आसीत्। अर्थात् आनन्द-वर्धनाचार्येण व्यञ्जनाशब्दवृत्त्या प्रतीतिविषयतां प्रापितस्य प्रतीयमानार्थस्यान्तर्भावः अनुमेयार्थे तात्पर्यार्थे वा समुपदिश्यते स्म समीक्षकैः अतो भोजदेवेनापि शब्दार्थस्वरूपं विवृण्वता पदेन अभिप्रायस्याप्रकाशनात् वाक्येनैव च तत्सम्भवात् तस्य वाक्यप्रतिपाद्यत्वं तात्पर्यविषयीभूतत्वञ्चाङ्गीकृतम्।

**भोजदेवस्य तात्पर्यवादः**

श्रीभोजदेवो वक्यस्यैवाभिप्रायावेदनं परामृशन् तात्पर्यमेवोपतिष्ठते। तेनोक्तं शृङ्गारप्रकाशे यत्-'यत्परः शब्दः स शब्दार्थ इति तात्पर्यम्। तच्च वाक्य एवोपपद्यते। पदमात्रेणाभिप्रायस्य प्रकाशयितुमशक्यत्वात्। वाक्यप्रतिपाद्यं तद्वस्तु त्रिरूपं भवति। अभिधीयमानं प्रतीयमानं ध्वनिरूपञ्च।

१. ''यत्र यदुपात्तशब्देषु मुख्यगौणीलक्षणाभिः शब्दशक्तिभिः स्वमर्थमभिधायोपरतव्यापारेषु आकाङ्क्षासन्निधियोग्यतादिभिर्वाक्यार्थमात्रमभि-धीयते तदभिधीयमानम्। यथा- गौर्गच्छति।

२. वाक्यार्थावगतेरुत्तरकालं वाक्यार्थ उपपद्यमानोऽनुपपद्यमानो वार्थप्रकरणौचित्यादिसहकृतौ यत्प्रत्याययति तत्प्रतीयमानम्। यथा– विषं भुङ्क्ष्व मा चास्य गृहे भुङ्थाः, इत्युक्ते वरं विषं भक्षितम्, न पुनरस्य गृहे भुक्तमिति प्रतीयते।

३. अर्थशब्दोपायादुपसर्जनीकृतस्वार्थो वाक्यार्थावगतेरनन्तरमनुनादरूपं प्रतिशब्दरूपं वाऽभिव्यञ्जयति तद्ध्वनिरूपम्। तच्च न सार्वत्रिकम्। तथाहि, यथा निवृत्तेऽभिघाते कस्यचिदेव कांस्यादेर्द्रव्यस्यानुनादो जायते, कस्यचिदेव कन्दरादेः प्रतिशब्दः तथा कस्यचिदेव वाक्यस्य प्रतीयमानाभिधीय-मानवाक्यार्थप्रतीतेरनन्तरं ध्वनिरुपलभ्यत इति। यथा–'निमिषत्येषेत्युक्ते अक्ष्णोर्निमेषोऽभिधीयते, देवी न भवतीति प्रतीयते। रूपातिशयश्च ध्वनति।'

तेनाभिधीयमानं चतुर्धा विभक्तम्–विधिरूपं निषेधरूपं विधिनिषेधरूप-मविधिनिषेधरूपञ्चेति। प्रतीयमानञ्चानेकविधं प्रोक्तं भोजदेवन। ध्वनिश्च प्रथमं तेन द्विधा विभक्तः– अर्थध्वनिः शब्दध्वनिश्च। तद् द्वयमपि अनुनादरूपप्रति-शब्दरूपत्वात्पुनः द्विविधं प्रतिपादितम्। इत्थं वाक्यात्प्रतिपद्यमानं तात्पर्यमेव मुख्यत्वेनाङ्गीकृत्य तद्भेदत्वेनाभिधीयमान-प्रतीयमानध्वनिरूपार्था वर्णिता भोजदेवेन। अर्थात् ध्वनिरूपार्थस्तु तात्पर्यस्यैव भेदः। अतो माङ्गलिकेषु पद्येषु प्रोक्तं यत्–

**'तात्पर्यमेव वचसि ध्वनिरेव काव्ये**
**सौभाग्यमेव गुणसंपदि वल्लभस्य।**
**लावण्यमेव वपुषि स्वदतेऽङ्गनायाः**
**शृङ्गार एव हृदि मानवतो जनस्य।।'**[१]

पुनः काव्यवचसोर्ध्वनितात्पर्ययोर्विशेष इति जिज्ञासायामुच्यते भोजेन–

**यदवक्रं वचः शास्त्रे लोके च वच एव तत्।**
**वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतिः।।**

**यदभिप्रायसर्वस्वं वक्तुर्वाक्यात्प्रतीयते।**
**तात्पर्यमर्थधर्मस्तच्छब्दधर्मः पुनर्ध्वनिः।।**[२]

१. शृ. प्र. १.५

**सौभाग्यमिव तात्पर्यमान्तरो गुण इष्यते।**
**वाग्देवताया लावण्यमिव बाह्यस्तयोर्ध्वनिः।।**[१]

साहित्यं निरूपयता तेन तस्य द्वादशविधसम्बन्धयुक्तत्वं प्रत्यपादि। यथोक्तं शृङ्गारप्रकाशे–''तत्राभिधा–विवक्षा–तात्पर्य–प्रविभाग–व्यपेक्षा–सामर्थ्य–अन्वय–एकार्थीभाव–दोषहान–गुणोपादान–अलङ्कार–रसावियोगरूपाः शब्दार्थयोः द्वादश–सम्बन्धाः साहित्यमुच्यते।'' साहित्याद्भिन्नं यद् वाङ्मयं भवति तद् दोषहानगुणोपादानालङ्काररसावियोगरूपैस्त्रिभिः सम्बन्धैः रहितं भवति। अष्टाभिः सम्बन्धैर्युक्ते वाङ्मये यत् तात्पर्यं तदेव वक्रत्वविशिष्टे काव्ये ध्वनिपदेनोच्यते। वक्रत्वं हि व्यवच्छेदकं काव्यस्य तस्यैव च द्वादशविधसम्बन्धसमवेतत्वं प्रतिपादितं भोजदेवेन। फलतः तात्पर्यस्य व्यापकत्वं काव्याकाव्ययोः सद्भावात् ध्वनेश्च व्याप्यत्वं काव्यमात्रसद्भावात्, सुतरां स्पष्टमेव। उक्तञ्च तेन–

**अदूरविप्रकर्षात्तु द्वयेन द्वयमुच्यते।**
**यथा सुरभिवैशाखौ मधुमाधवसंज्ञया।।**[२]

इत्थं तात्पर्यध्वन्योः विषयभेदेन किञ्चिद्भिन्नत्वे सत्यपि अभिप्राय–सर्वस्वभूतत्वेन एकत्वं प्रतिपादितम्। न खलु प्रतिपादनेनानेन तात्पर्यव्ञ्जनयोरे–कत्वमभिमतं तस्य व्यञ्जनायाः शब्दवृत्तित्वेनानङ्गीकारत्। तेन शब्दव्यापारविषये स्पष्टतः समुद्घोषितं यद् अभिधा, गौणी, लक्षणेति तिस्रः शब्दशक्तयः उक्तञ्च तेन शृङ्गारप्रकाशे– ''तेषु शब्दस्यार्थाभिधायिनी शक्तिरभिधा। तया स्वरूप इवाभिधेये प्रवर्तमानः शब्दो वृत्तित्रयेण वर्तते, ताश्च मुख्या गौणी लक्षणेति तिस्रः तत्र साक्षादव्यवहितार्थाभिधायिका मुख्या। गम्यमानशौर्यादिगुणयोग–व्यवहितार्था गौणी। स्वार्थाविनाभूतार्थान्तरोपलक्षणा तु लक्षणेति। तथाहि, गौरित्ययं शब्दो मुख्यया वृत्त्या सास्नादिमन्तमर्थं प्रतिपादयति, स एव तिष्ठन्मूत्रतादि–गुणसम्पदमपेक्षमाणो यदा वाह्लीके वर्तते तदा गौणीं वृत्तिमनुवदति।

---

१. तत्रैव, ६.१०७–१०९
२. शृ. प्र. ६.११०

तदाह–

**रूढ्या यत्रासदर्थोऽपि लोके शब्दो निवेशितः।**
**स मुख्यस्तत्र तत्साम्याद्गौणोऽन्यत्र स्खलद्गतिः।।[१]**

यदा तु शब्दः स्वार्थतः क्रियासिद्धौ साधनभावं गन्तुमसमर्थस्त-दाभिधेयाविनाभूतमर्थान्तरं लक्षयति। तदा सा लक्षणा वृत्तिः। यथा गङ्गायां घोषः प्रतिवसति। अत्र गङ्गाशब्दो विशिष्टोदकप्रवाहे निरूढाभिधानशक्तिः। स च घोषकर्तृकायाः प्रतिवसनक्रियाया अधिकरणभावं गन्तुमसमर्थः स्वार्थाविनाभूतं तटं लक्षयति। तदुक्तम्–

**अभिधेयाविनाभूतप्रतीतिर्लक्षणेति या।**
**सैषा विदग्धवक्रोक्तिजीवितं वृत्तिरिष्यते।।[२]**

प्रत्येकं चैतास्तिस्रोऽपि द्विधाभूत्वा पृथक् षोढा भिद्यन्ते इति। इत्थं नास्ति कश्चिद् व्यञ्जनाख्यः शब्दव्यापारो भोजदेवाभिमतः। तेन शब्दवृत्तित्रयं प्रतिपाद्य अभिधाशक्तेश्च मुख्यत्वं प्रदर्शयता वाक्यार्थतयाऽभ्युपपन्नस्यार्थस्य अभिधीयमानप्रतीयमान–ध्वनिभेदात् त्रैविध्यमभ्यधायि। न तत्र ध्वनिशब्देन कश्चिच्छब्दव्यपारोऽभिमतो भोजदेवस्य।

## भोजदेवस्य रससिद्धान्तः

भोजदेवस्य रसविषयको विचारः सर्वथा भिन्नो ध्वनिवादिनां रसविचारात्। ध्वनिवादिनः स्थायिनो रसत्वमङ्गीकुर्वन्ति किन्तु भोजराजमतेन सुखाद्यनुभवहेतुरूपः संविदोऽभिमान एव रसः। तस्य रसविषयकः सिद्धान्त आरम्भिकेषु माङ्गलिकपद्येष्वप्यस्ति प्रकाशितः। तद्यथा–

**तात्पर्यमेव वचसि ध्वनिरेव काव्ये**
**सौभाग्यमेव गुणसंपदि वल्लभस्य।**
**लावण्यमेव वपुषि स्वदतेऽङ्गनायाः**
**शृङ्गार एव हृदि मानवतो जनस्य।।**

---

२. शृ. प्र. ७.१

३. तत्रैव. ७.२

शृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
बीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दश रसान् सुधियो वयं तु
शृङ्गारमेव रसनाद्रसमामनामः।।

वीराद्भुतादिषु च येह रसप्रसिद्धिः
सिद्धा कुतोऽपि वटयक्षवदाविभाति।
लोके गतानुगतिकत्ववशादुपेता-
मेतां निवर्तयितुमेष परिश्रमो नः।।

अप्रातिकूलिकतया मनसो मुदादे-
र्यः संविदोऽनुभवहेतुरिहाभिमानः।
ज्ञेयो रसः स रसनीयतयाऽऽत्मशक्ते
रत्यादिभूमनि पुनर्वितथा रसोक्तिः।।

रत्यादयोऽर्धशतमेकविवर्जितानि
भावाः पृथग्विविधभावभुवो भवन्ति।
शृङ्गारतत्त्वमभितः परिवारयन्तः
सप्तार्चिषं द्युतिचया इव वर्धयन्ति।।

आभावनोदयमनन्यधिया जनेन
यो भाव्यते मनसि भावनया स भावः।
यो भावनापथमतीत्य विवर्तमानः
साहंकृतौ हृदि परं स्वदते रसोऽसौ।।

रत्यादयो य दि रसा स्युरतिप्रकर्षे
हर्षादिभिः किमपराद्धमतद्विभिन्नैः।
अस्थायिनस्त इति चेद्भयहासशोक-
क्रोधादयो वद कियच्चिरमुल्लसन्ति।।

स्थायित्वमत्र विषयातिशयान्मतं चे-
च्चिन्तादयः कुत उत प्रकृतेर्वशेन।

**तुल्यैव साऽऽत्मनि भवेदथ वासनायाः**
**संदीपनात्तदुभयत्र समानमेव।।**[१]

अतः सिद्धमेतत्– रत्यादयः शृङ्गारप्रभवा एव एकोनपञ्चाशद्भावाः वीरादयो मिथ्यारसप्रवादाः, शृङ्गार एवैकश्चतुर्वर्गैककारणं रस इति'' । इत्थं रत्यादीनां रसत्वं तेन खण्डितम्। प्रोक्तञ्च तेन– 'रत्यादिप्रकर्षाणां प्रेमण्येव पर्यवसानात् रसमिह प्रेमाणमामनन्तीति। तत्कथमुच्यते रत्यादिभूमनि पुनर्वितथा रसोक्तिरिति ? उच्यते, न रत्यादिभूमा रसः। किं तर्हि शृङ्गारः ? शृङ्गारो हि नाम विशिष्टेष्टदृष्टचेष्टाभिव्यञ्जकानाम् आत्मगुणसम्पदामुत्कर्षबीजं बुद्धिसुखदुःखे-च्छाद्वेषप्रयत्नसंस्काराद्यतिशयहेतुरात्मनोऽहङ्कारगुणविशेषः सचेतसा रस्यमानो रस इत्युच्यते। यदस्तित्वे रसिकोऽन्यथात्वे नीरस इति। तदाविर्भावहेतवश्च तत्प्रभवा एव भावाः। ते चैकोनपञ्चाशत् रतिहर्ष....... शमइति। तत्र केचिदाचक्षते 'रतिप्रभवः शृङ्गार इति। वयं तु मन्यामहे रत्यादीनामयमेव प्रभव इति। शृङ्गारिणो हि रत्यादयो जायन्ते, नाशृङ्गारिणः। शृङ्गारिणो हि रमन्ते, स्मयन्ते, उत्सहन्ते स्निह्यन्तीति। ते तु भाव्यमानत्वाद्भावा एव न रसाः। यावत्सम्भवं हि भावनया भाव्यमानो भाव्य एवोच्यते। भावनापथमतीतस्तु रस इति। मनोऽनुकूलेषु हि दुःखादिष्वपि सुखानुभवाभिमानो रसः। स तु पारम्पर्येण सुखहेतुत्वात् रत्यादिभूसूपचारेण व्यवह्रिते। अतो न रत्यादीनां रसत्वम् अपितु भावना-विषयत्वाद्भावत्वमेव।

यदप्युक्तं परप्रकर्षगामी रत्यादिभावो रस इति तदप्यसारम्। ग्लान्यादिष्वपि तदुपपत्तेः । ग्लान्यादयोऽपि हि श्रमादिभिः परं प्रकर्षमारोप्यन्ते। न ते स्थायिन इति चेत् स्थायित्वमेषामुत्पन्नतीव्रसंस्कारात्। संस्कारोत्पत्तिश्च विषयातिशयान्नायकप्रकृतेश्च। नायकप्रकृतिश्च त्रिधा–सात्त्विकी, राजसी तामसी च। तदन्वयाच्च तथाविधानुभवभावनोत्पत्तिः ततश्चैषां स्थायित्वव्यपदेशः इति।

नन्वष्टौ स्थायिनोऽष्टौ सात्त्विकास्त्रयस्त्रिंशद्व्यभिचारिणः इति ब्रुवते। न तत्साधु। यतोऽमीषामन्यतमस्यैतेनैव परस्परं निर्वर्त्यमानत्वात्।

---

१. शृ.प्र. १.५-१२

कश्चित्कदाचित्स्थायी कदाचित्तु व्यभिचारी। अतोऽस्थावशात् सर्वेऽप्यमी व्यभिचारिण: सर्वेऽपि च स्थायिन: सात्त्विका अपि सर्व एव मन: प्रभवत्वात्। अनुपहतं हि मनस्सत्त्वमित्युच्यते।

यच्चोक्तं विभावानुभावव्यभिचारिसंयोगस्य विद्यमानत्वात्। तस्माद्रत्यादय: सर्व एवैते भावा:, शृङ्गार एवैको रस इति। तैश्च स्वविभावानुभावै: प्रकाशमान: शृङ्गारो विशेषत: स्वदते''। इति।

उपर्युक्तविवेचनेन निष्पद्यते यत् तात्पर्यवादिनो भोजराजस्य शब्दशक्ति–विचारे व्यञ्जनाया नास्ति किमपि स्थानम्। वाक्यार्थतया प्रतीयमानस्य ध्वन्यर्थस्य तात्पर्यार्थभेदत्वेनैव प्रतिपादनात् तस्य अभिधागौणीलक्षणाभ्य: पृथक्शब्दवृत्त्या प्रतीति: प्रत्यादिष्टैव। अनेन प्रकारेण भोजराजेन न केवलं ध्वनिवादिनां सर्वस्वभूता व्यञ्जना प्रत्याख्याता अपितु तेषां व्यवस्थापितो रससिद्धन्तोऽपि अन्यथा कृत:। स्थायिनो रसत्वलाभस्तेन सर्वथा खण्डित:। अहंकारस्यैव रसत्वं तेनोरीकृतं युक्त्या शृङ्गाररसस्यैव रसत्वमङ्गीकुर्वता तेन तन्नाम्नैव स्वग्रन्थस्य नाम शृङ्गारप्रकाश इति कृतम्। वस्तुत: भोजदेवस्य रसविषयको विचार: काञ्चिद् अन्यामेव विच्छित्तिं जनयति। तथापि तद्विचारस्य तथा परिशीलनं न कृतमाचार्यै: यथा आवश्यकमासीत्।

## परिशिष्टम् - १

संस्कृतव्याख्यया संवलिता

## आनन्दवर्धनकृता ध्वनिकारिकाः

# प्रथम उद्द्योतः

**काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।**
**केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं**
**तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्॥१॥**

---

ध्वनिरिति संज्ञाशब्दोऽयम्। ध्वनिरिति ध्वनिसंज्ञितः, काव्यस्य सहृदयाह्लादजनकशब्दसन्दर्भस्य, आत्मा सारभूतः अर्थः इति सामानाधि-करण्येन निर्देशाद् ध्वनिसंज्ञितो व्यङ्ग्योऽर्थः इत्यर्थः सम्पद्यते। इत्थं च व्यञ्जकः शब्दः, व्यञ्जकोऽर्थः, व्यञ्जनाव्यापारः, व्यङ्ग्योऽर्थः व्यङ्ग्यार्थप्रधानं काव्यमित्येवंरूपाणां यावतामर्थानामितिकरणयुक्तेन संज्ञाशब्देन निर्देशो भवतीति ज्ञेयम्। एतदभिप्रायकत्वमेव काव्यस्यात्मा ध्वनिसंज्ञितः अर्थ इति स्वयं व्याख्यातवतो ध्वन्यालोककर्तुरिति शक्यं वक्तुम्। तस्य ध्वनेः प्रतीयमानार्थस्य, अभावमविद्यमानतां जगदुः कथयामासुः। अन्ये केचित् तस्य ध्वनेः भाक्तत्वं लक्षणाजन्य-प्रतीतिविषयत्वं आहुः वदन्ति। वर्तमाननिर्देशादिदानीन्तनानामपि अयमाशयोऽनुवर्तत इति सूच्यते। केचिदपरे तदीयं ध्वनिसम्बन्धि तत्त्वं ध्वनिव्यपदेशविषयत्वं वाचामविषये स्थितमनाख्येयमित्यूचुरवोचन्। तेन तेन हेतुना, सहृदयानां मनसि प्रीतिमुत्पादयितुं ध्वनेः व्यङ्ग्यार्थस्य, स्वरूपं ब्रूमः कथयामः॥१॥

**योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥२॥**

**तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।**
**बहुधा व्याकृतः सोऽन्यैः ततो नेह प्रतन्यते॥३॥**

**प्रतीयमानं पुनरन्यदेव, वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं, विभाति लावण्यमिवाङ्गनासु॥४॥**

---

सहृदयश्लाघ्यः सहृदयानां श्लाघां प्रशंसामर्हन् काव्यस्य चमत्कृतिजनकार्थप्रतिपादकशब्दसन्दर्भरूपस्य, योऽर्थः काव्यरूपशब्दप्रयोक्तुः तात्पर्यविषयः यः वाक्यार्थः, आत्मा शरीरस्येवात्मा सारभूतः। यस्यार्थस्य समावेशे स शब्दसन्दर्भः काव्यपदव्यपदेशयोग्यो भवति सः व्यवस्थितः, तस्य वाक्यतात्पर्यविषयीभूतस्यार्थस्य, वाच्य इति प्रतीयमान इति च आख्ये नामधेये ययोस्तौ उभौ भेदौ प्रकारौ स्मृतौ॥२॥

तत्र वाच्यप्रतीयमानयोर्मध्ये, वाच्यः अभिधेयः साक्षात् सङ्केतितोऽर्थः। उपमादिभिः उपमालङ्कारादिरूपैः प्रकारैर्भेदैः, यः प्रसिद्धः प्रसिद्धिमुपगतः, स वाच्यः, उपमादिरलङ्कारः भेदप्रभेदभिन्नः उद्भटादिभिरन्यैः, बहुधा बहुप्रकारेण, व्याकृतः व्याख्यातः, ततः बहुधा व्याकृतत्वादेव, इह अस्मिन् ध्वन्यालोके ग्रन्थे, न प्रतन्यते न विस्तरेणाभिधीयते। तथा चात्र वाच्यानामुपमादिनामलङ्काराणामिह विस्तरेणानभिधानस्य प्रसिद्धत्वमेको हेतुः। भट्टोद्भटादिभिर्बहुधा व्याकृतत्वं च द्वितीयः। एवमन्यैः काव्यलक्षणकृद्भिर्बहुधा वर्णितानामलङ्काराणां यथोपयोगमनुवादः क्रियते॥३॥

अर्थः सहृदयश्लाघ्य इत्युपक्रम्य वाच्यः प्रतीयमानश्चेति स द्विविध इत्यभ्युपगतवान् ध्वनिकारः। ततः प्रसिद्धत्वात् पूर्वैर्व्याकृतत्वाच्च विस्तरेण तस्य वर्णनाय नोद्युक्तवान्। अन्यश्चार्थः प्रतीयमानो व्यङ्ग्यः। चमकृतिजनकार्थबोधकाः शब्दाः, अर्थानामानुगुण्येनायोजिताः सङ्केतितमर्थं बोधयन्ति। ते चार्थाः परस्परमन्विता वाक्यार्थतां प्रपद्यन्ते।

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥५॥**

---

स च वाक्यार्थः पदसङ्घटनामहिम्ना यदि सङ्केतितानामर्थानां मिथोऽन्वयेन बोध्यमानेऽर्थ एव विश्राम्यति, काव्यस्य चारुत्वे हेतुर्भवति, सहृदयश्लाघ्यश्च भवति, स एव वाक्यतात्पर्यविषयीभूतो वाच्योऽर्थ इत्युच्यते। ततश्च, वक्त्रादिवैशिष्ट्यवशाद् महाकवीनां वाणीषु रमणी-यार्थप्रतिपादकेषु शब्दसन्दर्भेषु, प्रतीयमानं व्यङ्ग्यं, वाच्याद् वाक्यार्थाद् अन्यदेव वस्तु, यद् अस्ति तद् अर्थरूपं वस्तु, अङ्गनासु प्रमदासु प्रसिद्धावयवव्यतिरिक्तं प्रसिद्धेभ्यः करचरणादिभ्योऽवयवेभ्यः, अतिरिक्तं भिन्नं, अङ्गानां समुचितसन्निवेशमहिम्ना सञ्जातं लावण्यमिव सौन्दर्यमिव विभाति चकास्ति। प्रत्येकावयवेभ्यः प्रतीयमानस्य लावण्यस्यावयवी देहः यथाश्रयस्तथा प्रतीयमानस्यार्थस्य महाकवीनां वाणीरूपं शरीरमेवाश्रयः॥४॥

काव्यस्यैव ललितोचितसन्निवेशरुचिरशब्दसन्दर्भस्यैव। स एवार्थः प्रतीयमानोऽर्थः आत्मा सारभूतः। ''अर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः। वाच्यप्रतीतयमानाख्यौ तस्य भेदावुभौ स्मृतौ'' इत्यारभ्यैतदन्तेन प्रबन्धेन सहृदयश्लाघ्यः योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ। वाच्यस्यार्थस्य वस्त्वलङ्कारात्मना द्वैविध्यं प्रतीयमानस्य च वस्त्वलङ्काररसात्मना त्रैविध्यं चेति अर्थः पञ्चविधः प्रोक्तः। चमत्कृतिजनकत्वस्य सहृदयश्लाघ्यत्वस्य च सर्वेष्वपि तेष्वर्थेषु साधारण्येऽपि रसादिरूपोऽर्थः तदितरातिशायिचमत्कृतिजनक इत्याशयः। तथा च यतः रसादिरूपोऽर्थस्तदितरार्थापेक्षयातिशयितचमत्कृतिजन-कत्वात् सारभूतस्तत इत्यर्थः। पुरा पूर्वं, क्रौञ्चद्वन्द्ववियोगोत्थः क्रौञ्चद्वन्द्वस्य क्रौञ्चमिथुनस्य, वियोगादेकस्य कौञ्चस्य निषादेन हननेनोद्भूताद् विरहादुत्थः उत्पन्नः, शोकः आदिकवेः वाल्मीकेः श्लोकत्वं करुणरसाभिव्यञ्जकशब्दसन्दर्भरूपत्वमागतः प्राप्त इत्यर्थः॥५॥

**सरस्वती स्वादु तदर्थवस्तु, निःष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।।६।।**

---

प्रतीयमानस्य च व्यङ्ग्यस्यापि अन्यौ भेदौ यौ वस्त्वलङ्कारारूपौ तयोर्दर्शनेऽपि विद्यमानतया ज्ञानेऽपि वाच्यार्थापेक्षया प्राधान्येऽपि च, रसभावमुखेन रसमुखेन भावमुखेन च, व्यङ्ग्यवस्त्वलङ्कारापेक्षयापि प्राधान्येन रसभावादेस्तन्मुखेनैव, इतरयोरुपलक्षणं ज्ञापनं भवति। प्राधान्यात् रसपर्यवसायित्वादित्यर्थः।

अत्रेदं बोध्यम्—विभावानुभावव्यभिचारिभिः अभिव्यक्तः स्थायी रत्यादिः रसः। विभावानुभावाभिव्यक्तो व्यभिचारी भावः। विभावानुभावाभ्यां चर्व्यमाणस्य व्यभिचारिणः स्वात्ममात्रे विश्रान्तेरभावेऽपि, यत्र रसपर्यन्तविश्रान्तिः न जाता तत्र भावस्य सारभूतत्वमङ्गीक्रियत इति रसादिषु भावोऽप्यन्तर्भावित इति तस्य सारभूतत्वमुररीकृतम्। तथा वस्त्वलङ्कारयोः प्रतीयमानयोरर्थयोरपि तावन्मात्रेऽविश्रान्ततेति इतरशब्दवैलक्षण्यकारित्वेन सारभूतत्वमिति वस्तुध्वनेरलङ्कारध्वनेश्च तत्त्वं सूपपादम्।

अथ काव्यस्योद्भवे निर्माणे समुल्लासे च प्रतिभाया एवानन्यथासिद्धनियतपूर्वभाविन्या हेतुत्वं प्रतिपादयितुमाह—सरस्वतीति। तत् पूर्वोक्तम्, अर्थवस्तु प्रतीयमानार्थवत्त्वरूपं वस्तु, स्वादु आस्वाद्यं, निष्यन्दमाना स्वयं प्रस्नुवाना, महतां कवीनां, महाकवीनां, सरस्वती वाणी काव्यरूपा, परिस्फुरन्तं परितो भासमानम्, अलोकसामान्यम् अनन्यसाधारणं, प्रतिभाविशेषं काव्यविशेषस्योद्भवे निर्माणे समुल्लासे चानुकूलं नवनवोन्मेषशालिप्रज्ञाविशेषम् अभिव्यनक्ति सूचयति। तदुक्तं काव्यप्रकाशे—

शक्तिर्निपुणता लोकशास्त्राकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।।

शक्तिः कवित्वबीजरूपः संस्कारविशेषः, यां विना काव्यं न प्रसरेत्, प्रसृतं वोपहसनीयं स्यात्। लोकस्य स्थावरजङ्गमात्म-

**शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।**
**वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्॥७॥**

---

कलोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्ग-गजतुरगखड्गादिलक्षणग्रन्थानां, काव्यानां च महाकविसम्बन्धिनाम्, आदिग्रहणादितिहासादीनां च विमर्शनात् व्युत्पत्तिः। काव्यं कर्तुं विचारयितुं च ये जानन्ति, तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिरिति च त्रयः समुदिताः न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः'' इति।

जगन्नाथपण्डितराजस्तु, प्रतिभामेव केवलां काव्यस्य कारणं मन्यते। सा च प्रतिभा क्वचिद् व्युत्पत्त्यभ्यासाभ्यां क्वचिद् देवतामहापुरुषप्रसादादिजन्येनादृष्टेन जायत इति च वदति। सर्वथा प्रतिभां विना काव्यं न प्रसरेदिति प्रतिभैव मुख्यं काव्यस्योद्भवे कारणमिति सिध्यति॥६॥

शब्दश्चार्थश्च शब्दार्थौ, तयोः शासनं शब्दार्थशासनं, शब्दानुशासनं व्याकरणम् अर्थानुशासनं कोशादिश्च। व्याकरणज्ञानेन सुशब्दावगतिः, कोशेन पदानां सङ्केतितार्थावबोधश्च जायते। अस्यार्थस्यावबोधकोऽयं शब्दो वाचक इति, अस्य शब्दस्यायमर्थो वाच्य इति च शब्दार्थयोः वाच्यवाचकरूपसंसर्गज्ञानेन परं स प्रतीयमानोऽर्थः, न वेद्यते न ज्ञायते। व्याकरणात् सुशब्दान्, कोशादर्थांश्चाधिगतवद्भिः तावन्मात्रेण प्रतीयमानोऽर्थो नाधिगम्यत इति यावत्। तु किन्तु, काव्यार्थतत्त्वज्ञैः काव्यस्य सारभूतो यः प्रतीयमानोऽर्थः तस्य वाच्यातिशायिचमत्कृतिजनकत्वरूपं तत्त्वं जानद्भिः, तत्त्वज्ञानेनैव केवलं वेद्यतेऽधिगम्यते। एवं च शब्दार्थानुशासनज्ञानमात्रेण कविप्रयुक्तात् शब्दाद् वाच्यार्थबोधः, प्रतीयमानार्थतत्त्वज्ञानपुरस्कृतेन कविव्यापारेण प्रतीयमानार्थबोधश्च भवतीति वाच्यप्रतीयमानयोरर्थयोः सामग्रीभेदादपि भेदो वेदितव्यः॥७॥

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः॥८॥**

**आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।**
**तदुपायतया तद्वदर्थे वाच्ये तदादृतः॥९॥**

**यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।**
**वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुनः॥१०॥**

---

सोऽर्थः व्यङ्ग्योऽर्थः शब्दविशेषाद् व्यञ्जनाव्यापारजन्यप्रतीति-विषयत्वेनानुभूतः, इदानीं स्मृतिहेतुभावनारूपेणावतिष्ठमानः, यश्च तद्व्यक्तिसामर्थ्ययोगी तस्यार्थस्य व्यक्तौ अभिव्यञ्जने यत् सामर्थ्यं तस्य योगोऽस्येति तादृशः कश्चन शब्दश्च शब्दविशेषोऽपि। इति एवंभूतौ तौ शब्दार्थौ शब्दश्चार्थश्च, महाकवेः कर्त्तुः यो महाकविरहं भूयासमित्याशास्ते तस्येत्यर्थः। एवमाशंसारूपयोद्‌बोधकसामग्र्या। यत्नतः प्रयत्नेन, प्रत्यभिज्ञेयौ प्रत्यभिज्ञामर्हतः। एवं प्रत्यभिज्ञानेन व्यङ्ग्यमर्थ-मनुसन्धाय तद्व्यञ्जकशब्दस्य प्रत्यभिज्ञातस्य सुनिपुणं प्रयोगः कर्तव्य इत्यर्थः॥८॥

आलोकं रमणीयस्य वस्तुनो दर्शनं चाक्षुषप्रत्यक्षमर्थयमानो जनः, तदुपायतया तदुपायत्वेन, दीपशिखायां प्रत्यक्षं प्रत्यालोकस्य प्रकाशस्य, सहकारित्वेन, प्रदीपज्वालायां, यत्नवान् प्रयत्नवान्, यथा भवति, तद्वत् तथा, तदादृतः तं व्यङ्ग्यमर्थं प्रत्यादरवान्, व्यङ्ग्यमर्थमालोकयितुमर्थी, वाच्ये अभिधाव्यापारबोध्येऽर्थे यत्नवान् भवतीत्यर्थः॥९॥

वाक्यं पदसमूहः, तदर्थो वाक्यार्थः, स च पदार्थद्वारेण पदस्य पृथगर्थबोधद्वारेण पदार्थज्ञानपूर्वकमेव, वाक्यार्थः सम्प्रतीयते वाक्यार्थज्ञानं भवति। यथा पदार्थबोधानन्तरेव वाक्यार्थबोधोऽनुभवसिद्धः, तद्वत् तथा, तस्य वस्तुनः प्रतीयमानार्थस्य, प्रतिपद् अवगतिः, वाच्यार्थपूर्विका वाच्यार्थः पूर्वं यस्याः सा तादृशी भवति॥१०॥

**स्वसामर्थ्यवशेनैव वाक्यार्थं प्रतिपादयन्।**
**यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते॥११॥**

**तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।**
**बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते॥१२॥**

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥१३॥**

---

स्वसामर्थ्यवशेन, अत्र स्वशब्देन पदार्थो गृह्यते। स्वस्य तत्तत्पदेन वृत्त्या व्यापारेण उपस्थितस्य तत्तदर्थस्य यत् सामर्थ्यम् आकाङ्क्षा-योग्यतासन्निधिमत्त्वं, तद्वशेन, तत्सहकारेण, वाक्यार्थं, वाक्यतात्पर्य-विषयीभूतमेकवाक्यतयान्वयबोधविषयं विशिष्टार्थं प्रतिपादयन् बोधयन् पदार्थः प्रत्येकपदार्थः। व्यापारनिष्पत्तौ व्यापारस्य वाक्यार्थबोधानुकूल-स्याकाङ्क्षादेः सहकारेण फलप्राप्तौ सत्यां, यथा न विभाव्यते पृथक्त्वेन न ज्ञायते, तथेत्युत्तरकारिकया सम्बन्धो वेदितव्यः॥११॥

तद्वत् तथा वाच्यार्थविमुखात्मनां वाक्यार्थरूपे वाच्यार्थे विमुखः तद्बोधमात्रेणापरितुष्यत् आत्मा येषां तेषां सचेतसां सहृदयानां, तत्त्वार्थदर्शिन्यां तत्त्वार्थस्य सारभूतस्यार्थस्य दर्शनोत्सुकायां, बुद्धौ प्रज्ञायां, सोऽर्थः प्रतीयमानोऽर्थः, झटित्येव क्षिप्रमेव, अवभासते प्रकाशते। वाक्यार्थबोधानन्तरं वाच्यबोधोऽपि प्राधान्येन न प्रकाशत इत्यर्थः॥१२॥

यत्र यस्मिन् काव्यविशेष इत्यर्थः। अस्य स काव्यविशेषः इत्यनेन सम्बन्धः। अर्थो वाच्यः। वा अथवा। शब्दो वाचकः। उपसर्जनी-कृतस्वार्थाविति द्विवचनेन अर्थशब्दयोरुभयोरपि उपसर्जनीकृतस्वार्थत्व-मभिमतमिति ज्ञायते। अनुपसर्जनमुपसर्जनं सम्पद्यमानं कृतम् उपसर्जनीकृतम्, तच्च तत् स्वं चोपसर्जनीकृतस्वं, तद्रूपोऽर्थो येन स उपसर्जनीकृतस्वार्थ इति अर्थविशेषणम्। अर्थःस्वात्मानम् (अर्थम्) उपसर्जनमप्रधानं कुर्वन्, अर्थः स्वयमुपसर्जनीभवन् अप्रधानीभवन्नित्यर्थः।

तथा उपसर्जनीकृतः स्वस्य (शब्दस्य) अर्थः अभिधेयः येन स शब्दः इत्युपसर्जनीकृतस्वार्थत्वं शब्दविशेषणम्। एवं च उपसर्जनीभूतोऽर्थः उपसर्जनीकृतार्थः शब्दो वा इत्यर्थः। उपसर्जनीकृतस्वार्थश्च उपसर्जनीकृतस्वार्थश्च उपसर्जनीकृतस्वार्थौ। उपसर्जनीकृतस्वार्थत्वमुभयोरपि सम्भवतीति प्रदर्शयितुमुपसर्जनीकृतस्वार्थाविति द्विवचनमुपात्तम्।। ''सरूपाणामेकशेष एकविभक्तावित्येनैकशेषः''। तथाप्युभयोरप्युपसर्जनीकृतस्वार्थत्वं नैकरूपम्। अर्थः शब्दो वा इत्येकवचनमुपात्तं तु तयोः पृथक् प्राधान्याभिप्रायेण। प्राधान्येनार्थस्य व्यञ्जकत्वे शब्दस्य सहकारित्वं, शब्दस्य प्राधान्येन व्यञ्जकत्वे तु अर्थस्य सहकारित्वं च वेदितव्यम्। नतु तयोरुभयोरेकस्थलानुरोधेन व्यञ्जकत्वे प्रधान्यं सम्भवति। तमर्थं योऽविद्यमानत्वादिवादनिराकरणेन साधितः तं प्रतीयमानमर्थं व्यङ्क्तः व्यञ्जयतः। उपसर्जनीकृतस्वार्थाविति विशेषणानुरोधेन व्यङ्क्त इति द्विवचनम्। स काव्यविशेषः ध्वनिः ध्वनिसंज्ञित इति एवं, सूरिभिः विद्वद्भिः, कथित उक्तः।

वस्तुतस्तु–''वा स्याद् विकल्पोपमयोर्वितर्के पादपूरणे समुच्चये च'' इति मेदिनी। ''वा स्याद् विकल्पोपमयोरेवार्थे च समुच्चये इति विश्वः। इति कोशपर्यालोचनया वाकारस्य समुच्चयार्थत्वावगतेः उपसर्जनीकृतात्मा अर्थः, उपसर्जनीकृतार्थः शब्दश्च यत्रार्थान्तरं व्यञ्जयतः स काव्यविशेषो ध्वनिरिति ध्वनिकृद्वचने न काप्यनुपपत्तिः। तदनुरोधेनैव पण्डितराजेन ''शब्दार्थौ गुणीभावितात्मानौ यत्रार्थान्तरमभिव्यङ्क्तस्तदाद्यम्'' इति उत्तमोत्तमकाव्यलक्षणमभिहितम्।

एवं ध्वनिलक्षणेऽर्थो लक्षणामूलोऽभिधामूलश्चेति द्विविधः। शब्दादेव लक्षणया लक्ष्यार्थबोधे सति तन्मूलः प्रयोजनादिरूपो योऽर्थस्तत्प्रतिपादने व्यञ्जनाव्यापार एव प्रभवतीति स शब्दो व्यञ्जक इत्युच्यते। वस्त्वलङ्कारसादिरूपाणां त्रयाणामपि व्यङ्ग्यार्थानाम् अर्थसामर्थ्याक्षिप्तत्वस्य साधारण्यात् लक्षणामूलध्वनौ अर्थस्य प्राधान्येन व्यञ्जकत्वं, शब्दस्य सहकारित्वं चाभ्युपगम्यते। अभिधामूलध्वनौ तु अनेकार्थबोधनसमर्थस्य शब्दास्याभिधया संयोगादीनां साहाय्येन

प्राकरणिकार्थबोधः प्रथमं सञ्जायते। ततः तदर्थबोधनेन क्षीणशक्तिरभिधा अर्थान्तरं बोधयितुं यतोऽसमर्था ततो व्यञ्जनयार्थान्तरप्रतीतिर्जायत इति मतानुसारेण तस्य व्यङ्ग्यस्यार्थस्य स शब्द एव प्राधान्येन व्यञ्जकः। प्राथमिकार्थश्च सहकारीति विवेकः। तदुक्तम्–

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्॥

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥

सामर्थ्यमौचिती देशः, कालो व्यक्तिः स्वरादयः।

शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥'' इति।

काव्यं चोत्तममध्यमाधमभेदेन त्रिविधमित्याहुरालङ्कारिकाः मम्मटादयः। यत्र व्यङ्ग्योऽर्थो वाच्यातिशायी तदुत्तमं काव्यम्। वाच्यादनतिशायिनि व्यङ्ग्ये मध्यमं काव्यम्। अव्यङ्ग्यं तु अधमं काव्यमिति च। अव्यङ्ग्यमित्यत्र नञीषदर्थे बोध्यः। अनुदरा कन्येत्यत्र यथा। तदेवोक्तम्–

तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता।
अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्त्तिताः॥ इति।

एतेन शब्दबोध्योपसर्जनीभूतार्थव्यङ्ग्य-शब्दबोध्योपसर्जनीकृतार्थव्यङ्ग्यान्तरत्वं ध्वनिसामान्यलक्षणम्। तच्चाविवक्षितवाच्य-विवक्षितान्यपरवाच्यान्यतरत्वरूपम्। एवं च अविवक्षितवाच्यविवक्षितान्यपरवाच्यान्यतरार्थव्यञ्जकशब्दत्वं काव्यविशेषस्य लक्षणम्। काव्यसामान्यलक्षणं तु योऽर्थः सहृदयश्लाघ्य इत्यनेनोक्तम्। तथा च यत्रार्थ उपसर्जनीभूतस्तमर्थं व्यनक्ति सोऽविवक्षितवाच्यो लक्षणामूलध्वनिः। यत्र शब्द उपसर्जनीकृतार्थस्तमर्थं व्यनक्ति, स विवक्षितान्यपरवाच्योऽभिधामूलध्वनिः इति च ध्वनेः प्रकारद्वयमपि कारिकयैव प्रतिपादितमिति वेदितव्यम्॥१३॥

**भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।**
**अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया॥१४॥**

**उक्त्यन्तरेणाशक्यं यत्, तच्चारुत्वं प्रकाशयन्।**
**शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयी भवेत्॥१५॥**

---

अयमुक्तप्रकारो ध्वनिः व्यापारोऽपि भक्त्या व्यापारेण भिन्नरूपत्वाद् मिथो भिन्नार्थप्रतिपादकत्वाद्, एकत्वम् एकरूपत्वं, न बिभर्ति। व्यापारयोरनयोः स्वरूपतोऽपि भेदं प्रदर्शयति वाच्येति। वाच्यवाचकाभ्यां वाच्येनाभिधाबोधितेन वाच्यार्थेन, वाचकेन वाच्यार्थबोधकेन शब्देन च, वाच्यव्यतिरिक्तस्य वाच्यभिन्नस्य, वाच्यादर्थादधिकचमत्कृतिमावहतोऽर्थान्तरस्य तात्पर्येण वक्तृविवक्षया प्रकाशनमाविष्करणं यत्र स्थलविशेषे, व्यङ्ग्यप्राधान्ये तथा प्रकाशमानस्यार्थस्य प्राधान्ये प्रधानवाक्यार्थत्वे, स व्यापारो ध्वनिर्ध्वनिसंज्ञितः, उपचारमात्रं सादृश्यात् सम्बन्धान्तरतोऽपि वा लक्ष्यमाणगुणैर्योगमात्रं प्रतिपादयति भक्तिव्यापारः। एवं व्यापारयोरप्यनयोः स्वरूपभेदात् तयोरेकत्वं दुरुपपादमित्यर्थः।

ध्वनेर्व्यङ्ग्यस्यार्थस्य, भक्तिर्भाक्तत्वं भक्तेरागतत्वं लक्षणाजन्यबोधविषयत्वं लक्षणमिति यद् व्यावर्तकम् इति यदुक्तम्, एतच्च एतदपि, मा स्यात् मा भूदित्याह, तदपि निराकरोतीत्यर्थः।

अलक्ष्यवृत्तित्वमतिव्याप्तिर्लक्षणस्य। लक्ष्यैकदेशवृत्तित्वमव्याप्तिश्च। द्वाभ्यामेताभ्यां, लक्षणदोषाभ्यां, असौ ध्वनिः, तया भक्त्या, भक्तिजन्यबोधविषयत्वेन, न लक्ष्यते भाक्तत्वं ध्वनेर्लक्षणं न भवितुमर्हति, अतिव्याप्तेरव्याप्तेश्चेत्यर्थः॥१४॥

यत् सौन्दर्यम् उक्त्यन्तरेण ध्वनिनाम्नो व्यञ्जकाच्छब्दादन्येन, अशक्यं बोधयितुं न शक्यते। शब्दः स एव शब्दो व्यञ्जकतां व्यञ्जकत्वं व्यङ्ग्यार्थबोधकत्वं बिभ्रद्, ध्वन्युक्तेर्विषयी भवेत् ध्वनिपदव्यपदेशभाग् भवति॥१५॥

**रूढ़ा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।**
**लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः॥१६॥**

**मुख्यां वृत्तिं परित्यज्य, गुणवृत्त्यार्थदर्शनम्।**
**यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः॥१७॥**

---

लावण्याद्याः लावण्यानुकूलप्रतिकूलादयो ये शब्दाः, स्वविषयादपि, स्वस्य विषयाद् योगजन्यार्थप्रतीतिविषयादपि अन्यत्रान्यस्मिन् विषये, अनादितात्पर्यविषयीभूतेऽर्थे, रूढाः निरूढाः प्रयुक्ताः, ते शब्दाः ध्वनेः पदमधिष्ठानं न भवन्ति, तत्रापि ध्वनिव्यवहारो नास्तीत्यर्थः। तेष्विति। तेषु अर्थेषु च। उपचरिता गौणी शब्दस्य वृत्तिर्व्यापारात्मिकास्तीति निरूढलक्षणयार्थप्रतिपादकेषु शब्देष्वपि ध्वनिविषयत्वं नास्तीति फलितोर्थः। तथाविधे च विषये, यत्र निरूढलक्षणयार्थप्रतिपादकाः लावण्यादयः शब्दा यस्मिन् शब्दसन्दर्भात्मके काव्ये प्रयुक्ताः, तादृशे क्वचित् स्थलविशेषे, सम्भवन्नपि विद्यमानत्वेनाङ्गीक्रियमाणोऽपि, ध्वनिव्यवहारो ध्वनिव्यपदेशविषयत्वरूपः प्रकारान्तरेण लावण्यादिशब्दघटितवाक्यस्य वाच्यो यः सहृदयश्लाघ्योऽर्थः, तस्य व्यञ्जकत्वात्मकव्यापारमहिम्ना प्रवर्तते प्रतीतिपथमवतरति। नत्विति—तु किन्तु, तथाविधशब्दमुखेन लावण्यादिशब्दद्वारा न प्रवर्तन्त इत्यर्थः॥१६॥

मुख्यां वृत्तिमभिधाव्यापारं परित्यज्य विहाय, गुणवृत्त्या लक्षणाव्यापारेण, अर्थदर्शनम् अर्थस्य दर्शनं ज्ञापनं, यत् फलं यादृशं प्रयोजनं, उद्दिश्याभिसन्धाय, क्रियते, तत्र तस्मिन्नर्थे, शब्दः न स्खलद्गतिः स्खलन्ती प्रच्युता भवन्ती, गतिर्बोधनसामर्थ्यं यस्य तादृशो न भवतीत्यर्थः।

इदं तु तत्त्वम्—प्रयोजनप्रतिपिपादयिषया लाक्षणिकशब्दप्रयोगे कवीनां नैर्भर्यम्। कविना प्रयुज्यमानश्च स शब्दः मुख्यार्थबाधादिसमवधाने लक्ष्यमर्थं बोधयितुं न खल्वसमर्थो दृश्यते। तथा तादृशशब्दप्रयोक्त्रा कविना प्रेप्सितस्य प्रयोजनरूपस्यार्थस्यापि बोधने

समर्थ एव स शब्दो भवति। किन्तु लक्ष्योऽन्यः, व्यङ्ग्यश्चान्य इति विषयभेदादपि। स एव शब्दोऽभिधया, लक्षणया, व्यञ्जनया च तत्तत्स्थलानुरोधेन वाच्यं, लक्ष्यं, व्यङ्ग्यं चार्थं बोधयितुं समर्थ एवेति यावत्। उक्तं काव्यप्रकाशे–

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।। इति।

तदेव विशदीकरोति–तत्र हीति। हि यतः, चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे चारुत्वातिशयः सौन्दर्यातिशयः तद्विशिष्टार्थस्य प्रकाशनात्मके प्रयोजने, कर्तव्ये विधातव्ये, शब्दस्य यदि अमुख्यता स्खलद्गतित्वं चेत्, तदा तस्य तादृशस्यासमर्थस्यार्थावबोधनसामर्थ्यरहितस्य शब्दस्य प्रयोगे दुष्टतैव स्यात्। काव्यं तादृशशब्दसन्दर्भात्मकं दुष्टमेव स्याद् इति यावत्। न चैवं, एवं न वस्तुस्थितिः। यद्वा अमुख्यता गौणता। गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिरूपे प्रयोजने तस्य शब्दस्य गङ्गाशब्दस्य यदि गौणत्वं प्रयोजनप्रतीतिः लक्षणया भवतीत्यङ्गीक्रियते, तदा तत्र प्रयोगे, दुष्टतैव स्यात्। शैत्यपावनत्वादिरूपे फले गङ्गाशब्दस्य सङ्केताभावात् अभिधा तत्र न प्रसरत्येव। प्रयोजने लक्षणापि न प्रभवति। मुख्यार्थबाधाद्यभावात्। यश्च गङ्गाशब्दस्य तटरूपोऽर्थः, स न मुख्यः। यथा गङ्गाशब्दः स्रोतसि बाधित इति तटं लक्षयति, तथा तटेऽपि यदि बाधितस्तदा प्रयोजनं लक्षणया बोधयेत्। तटं तु न मुख्योऽर्थः। न च तस्य बाधः। शैत्यपावनत्वादिभिः च तटस्य सम्बन्धोऽपि नास्ति। नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्। नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः। तस्यापि प्रयोजनान्तरेऽभ्युपगम्यमानेऽनवस्था। उक्तं च काव्यप्रकाशे–

लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः।। इति।।१७।।

**वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।**
**व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्॥१८॥**

**कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम्।**
**लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः॥१९॥**

---

वाचकत्वाश्रयेणैव वाचकत्वमभिधाव्यापारमाश्रित्यैव अभिधा-पुच्छभूतैव, व्यवस्थिता व्यवस्थां भजमाना, गुणवृत्तिः भाक्तत्वं (भक्तिः) व्यञ्जकत्वैकमूलस्य व्यञ्जकत्वं व्यञ्जनाव्यापार एव एकं मुख्यं, मूलं कारणं यस्य तादृशस्य, ध्वनेर्व्यङ्ग्यार्थस्य, लक्षणं व्यावर्तकधर्मः, कथं स्यात् कथं भवेत्। भज्यते सेव्यतेऽनया मुख्योऽर्थ इति व्युत्पत्त्यनुरोधेन, मुख्यमर्थमाश्रित्यैव प्रवर्तमाना भक्तिः गुणवृत्तिः व्यञ्जनामात्रगम्यस्य व्यङ्ग्यस्यार्थस्य कथमपि बोधिका न भवति। अतो भक्तिर्ध्वनिलक्षणमपि न भवितुमर्हतीति भावः॥१८॥

अविद्यमानं व्यावर्तकमुपलक्षणम्। काकवद् देवदत्तगृहमित्यत्र काकवत्त्वमुपलक्षणम्। तच्च देवदत्तगृहमितरस्माद् व्यावर्त्य ततो निवर्तते। तस्य च तत्र सर्वदावस्थानं नियमेन नापेक्ष्यते। तथा गङ्गाशब्दः प्रथमं तटं भक्त्या लक्षयति। ततश्चोपलक्षणविधया शैत्यपावनत्वादिकं बोधयति। तथा च भक्तिजन्यप्रतीतिविषयत्वरूपं भाक्तत्वं ध्वनेरुपलक्षणं भवत्विति पूर्वपक्षाशयः। शैत्यपावनत्वादिकं प्रत्याययित्वा ततो निवर्तत इत्यर्थः। सा तु भक्तिरस्तु। कस्यचिद् ध्वनिभेदस्य यस्मिन् ध्वनेः प्रभेदे भक्तिर्वर्तते तस्य ध्वनेः। उपलक्षणम् अविद्यमानो व्यावर्तको धर्मः, स्याद् भवेद्, भवत्वित्यर्थः।

किञ्च अपि च, अस्य ध्वनेः, अन्यैः पूर्वैरलङ्कारशास्त्रकारैः लक्षणे कृतेऽपि भाक्तत्वमन्यद् वा यत् किमपि लक्षणं विहितं चेदपि, नः अस्माकं ध्वनिकाराणां, पक्षसंसिद्धिरेव पक्षस्य सम्यक् सिद्धिरेव सञ्जातेत्यर्थः॥१९॥

# द्वितीय उद्द्योतः

**अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम्।**
**अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम्॥१॥**

**असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः।**
**विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः॥२॥**

---

अविवक्षितवाच्यस्य अविवक्षितं तात्पर्याविषयीभूतं पदार्थान्तरान्वयायोग्यं वा वाच्यं वाच्योऽर्थः यस्य तादृशस्य ध्वनेः अनेनाभिधेयस्यार्थस्य या पदार्थान्तरेण साकमन्वयस्य तात्पर्यस्य वानुपपत्तिस्तस्या लक्षणाबीजत्वं सूचितम्। अत एव प्रथमभेदस्यास्य लक्षणामूलध्वनित्वमिति ज्ञेयम्। वाच्यं वाच्योऽर्थः, अर्थान्तरे सङ्क्रमितम् अन्येन प्रकारेण वाच्यलक्ष्यसाधारणेऽर्थे सङ्क्रमितं परिणमितम्। वा अथवा, अत्यन्तं तिरस्कृतम्। प्रकृतार्थान्वयानुपयोगत्वेनान्यार्थमात्रबोधकम्। एवं द्विधा द्विप्रकारेण मतम् अभिमतमित्यर्थः॥१॥

विवक्षिताभिधेयस्य विवक्षितं तात्पर्यविषयत्वेनाभिमतम् अभिधेयं वाच्योऽर्थः यत्र, तस्य ध्वनेः व्यङ्ग्यार्थस्य। आत्मा स्वरूपः, असंलक्ष्यक्रमोद्योतः असंलक्ष्यः सूक्ष्मतया लक्षयितुम् अशक्यः क्रमः यत्र तादृशः उद्द्योतः प्रकाशो यत्र तादृशः, कार्यकारणयोः पौर्वापर्य-क्रमस्य नियतत्वेऽपि कचिद्विद्यमानोऽपि क्रमः सूचीशतपत्रपत्रशतभे-दन्यायेन न लक्ष्यत इति स एको ध्वनिः। परः अन्यः द्वितीय इत्यर्थः। क्रमेण द्योतितः संलक्ष्येण क्रमेण प्रतिभासमानः, द्विधा मतः द्वेधा अभिमन्यत इत्यर्थः। एतेनासंलक्ष्यक्रमोद्द्योत- संलक्ष्यक्रमोद्द्योतान्यतरत्वं विवक्षितान्यपरवाच्यध्वनेर्लक्षणम् उक्तं वेदितव्यम्। तथा च

**रसभावतदाभास-भावशान्त्यादिरक्रमः ।**
**ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः॥३॥**

**वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।**
**रसादिपरता यत्र स ध्वनेर्विषयो मतः॥४॥**

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥५॥**

**तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्॥६॥**

---

विवक्षितान्यपरवाच्यो ध्वनिः असंलक्ष्यक्रमः, संलक्ष्यक्रमश्चेति द्विविधः सम्पद्यते॥२॥

अक्रमः असंलक्ष्यक्रमस्य ध्वनेरात्मा प्रकारः, अङ्गिभावेन प्राधान्येन, भासमानः प्रकाशमानः। रसभावतदाभासभावशान्त्यादिः, रसः, भावः, तदाभासाः रसाभासाः भावाभासाश्च, भावशान्त्यादिः, भावशान्तिः, भवोदयः, भावसन्धिः, भावशबलता च व्यवस्थितः॥३॥

वाच्यस्याभिधेयस्यार्थस्य, वाचकस्याभिधायकस्य शब्दस्य च, यच्चारुत्वं सौन्दर्यं तस्य हेतूनां तदाधायकशब्दार्थालङ्काराणां, यत्र यस्मिन् काव्ये, रसादिपरता रसभावाद्युपस्कारकत्वम् रसस्य प्रधानवाक्यार्थत्वम् अलङ्काराणां तत्तात्पर्यकत्वं च, स रसादिः ध्वनेर्विषयः ध्वनिव्यपदेशविषयः, मतः अभिमत इत्यर्थः॥४॥

अन्यत्रान्यस्मिन् वाक्यार्थे वस्त्वलङ्काररूपे वाच्ये, वस्त्वलङ्काररूपे व्यङ्ग्ये वा अर्थे, प्रधाने प्रधानवाक्यार्थभूते सति, यत्र यस्मिन् काव्ये, रसादयः रसभावतदाभासादयः अङ्गम् अङ्गत्वं प्रपद्यन्ते, तस्मिन् काव्ये, रसादिः रसभावादिः, अलङ्कारः अलङ्कारव्यपदेशविषयः इति मे मतिः इति ग्रन्थकारस्याभिप्रायः॥५॥

येऽङ्गिनं प्रधानवाक्यार्थत्वेन अङ्गिभूतं, तमर्थं रसभावादिरूपं प्रतीयमानमर्थम्, अवलम्बन्ते आश्रित्यावतिष्ठन्ते, ते गुणाः स्मृताः।

**शृङ्गार एव मधुरः परः प्रह्लादनो रसः।**
**तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति॥७॥**

**शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।**
**माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः॥८॥**

**रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः।**
**तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥९॥**

---

अङ्गानि वाच्यवाचकरूपाणि आश्रिताः आश्रित्य वर्तमानाः कटकादिवत् शरीरमाश्रित्य कटकादय इव, विद्यमानं तमेवार्थं परम्परया उपकुर्वाणास्तु, अलङ्काराः मन्तव्याः अलङ्कारपदव्यपदेश्या इत्यर्थः॥६॥

मधुरः माधुर्यगुणविशिष्टः, शृङ्गारः एव परः प्रह्लादनः इतरातिशाय्याह्लादजनकः रसो भवतीत्यर्थः। तन्मयं शृङ्गारमयं काव्यम् आह्लादजनकार्थप्रतिपादकशब्दसन्दर्भस्य काव्यत्वात्। यत्र शृङ्गारो व्यङ्ग्यः प्राधान्येन तद्व्यञ्जकं शब्दरचनादिकमाश्रित्य माधुर्यं पृथक्पदत्वरूपं प्रतितिष्ठति प्रतिष्ठितं वर्तते। आह्लादजनकत्वरूपं यन्माधुर्यं स रसधर्मः शौर्यादिरिवात्मनः। तेन मधुरो रस इति मुख्यः प्रयोगः, वर्णरचनादिगतं च पृथक्पदत्वादिकमपि तत्तद्रसानुगुण्येन आह्लादप्रयोजकं शरीरगतम् आकारसौष्ठवादिकमिवेति मधुरा रचना, मधुरो वर्णः इत्यादिः गौणः प्रयोगः। आह्लादप्रयोजकत्वं माधुर्यं शरीरात्मनोरविशिष्टम्॥७॥

यतो यस्माद्, विप्रलम्भाख्ये शृङ्गारे विप्रलम्भशृङ्गारे, करुणे च करुणरसे च, मनश्चित्तम्, अधिकमधिकतया आर्द्रतामार्द्रीभावं, याति प्राप्नोति। अतिशयितां चित्तवृत्तिं द्रुत्यात्मिकां जनयतीति भावः। ततो विप्रलम्भशृङ्गारे करुणे च माधुर्यं प्रकर्षवत् प्रकृष्टमित्यर्थः॥८॥

काव्यवर्तिनः काव्ये वर्तमानाः, रौद्रादयो रौद्रप्रकाराः वीरबीभत्सरौद्रा इत्यर्थः। दीप्त्या रसा लक्ष्यन्ते दीप्तिमत्त्वेन लक्ष्या

**समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।**
**स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः॥१०॥**

**श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥११॥**

---

भवन्ति। चित्तस्य विस्ताररूपा दीप्तिः वीराद् बीभत्से, ततोऽपि रौद्रे च, क्रमेण सातिशया वर्तते। ततस्तत्कारणमोजः क्रमेणोत्कर्षवत्। स्निग्धस्य सामाजिकचित्तस्य, द्वेष्यविषयसम्पर्केण, दीप्तत्वमुष्णता जायते। तत्र वीरस्य द्वेष्यनिग्रहे जिगीषामात्रम्। बीभत्से तु जुगुप्सितविषयेऽत्यन्तं त्यागेच्छा। रौद्रे तु आत्मविस्तृतिरूपाया दीप्तेः या व्यक्तिरभिव्यक्तिस्तस्या हेतू, शब्दार्थौ शब्दमर्थं च आश्रित्याधिष्ठाय, ओजः दीप्तिजनकत्वरूपो गुणः व्यवस्थितः अत्रापि ओजस्वी रस इति मुख्यः, ओजस्वी बन्धः इति च गौणः प्रयोगः॥९॥

काव्यस्य कविकर्मणः, सर्वरसान् शृङ्गारादीन् माधुर्येणौजस्वित्वेन च। विदितानितरानपि च सर्वान् रसान् प्रति यत् समर्पकत्वं सहृदयहृदयसंवादकारित्वं, स सर्वरससाधारणक्रियः सर्वेषां रसानां साधारणी अनुकूला क्रिया स्थितिर्यस्य तादृशः प्रसादो गुण इति ज्ञेयः प्रसादाख्यो गुण इत्यवगन्तव्यः॥१०॥

ये च यद्रूपाश्च श्रुतिदुष्टादयः श्रुतिदुष्टत्वादयो दोषाः शब्दार्थदोषाः, दर्शिता उक्ताः। ते दोषाः, ध्वन्यात्मनि प्राधान्येन ध्वन्यमाने, शृङ्गारे शृङ्गाररसमात्रे, हेयाः त्याज्याः, इति उदाहृता उक्ताः। स्वयं विवृणोति–अनित्या इति। अनित्या नित्यत्वशून्याः। श्रुतिदुष्टादयः श्रुतिदुष्टत्वादयः, ये दोषाश्च सूचिताः ये दोषत्वेन प्रकाशिताः ते दोषाः, वाच्ये अर्थमात्रे न हेयाः, न च व्यङ्ग्ये, शृङ्गारव्यतिरेकिणि शृङ्गारभिन्ने व्यङ्ग्ये च। एवं ध्वनेः अनात्मभूते शृङ्गारे, प्राधान्येन प्रतीत्यविषये। तेन किमायातमित्याह–किं तर्हीति। अङ्गितया प्राधान्येन, व्यङ्ग्ये प्रतीयमाने, ध्वन्यात्मनि ध्वनिरूपे शृङ्गारे शृङ्गारध्वनावेत्यर्थः। ते श्रुतिकटुत्वादयो दोषाः, हेयाः त्याज्याः,

**तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये।**
**तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ॥१२॥**

**दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम्।**
**बुद्धिरासादितालोका सर्वत्रैव भविष्यति॥१३॥**

**शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान्।**
**सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः॥१४॥**

---

इति एवम्, उदाहृताः प्रदर्शिताः। अन्यथा श्रुतिकटुत्वादीनां क्वचिद् हेयत्वं, क्वचित् तदभावः, इति यदि न स्यात्, तेषां दोषाणाम् अनित्यदोषतैव अनित्यदोषत्वं न स्यादेव न भवेत्। एवमुक्तप्रकारेण, असंलक्ष्यक्रमद्योतो ध्वनेरात्मा असंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः स्वरूपं सामान्येन प्रदर्शितं सामान्यतो वर्णितमित्यर्थः॥११॥

तस्य ध्वनेः अङ्गानामलङ्काराणां ये प्रभेदा अवान्तरभेदाः। ये च स्वगता आत्मगताश्च, प्रभेदाः, तेषां प्रभेदानाम् अन्योन्यसम्बन्धपरिकल्पने अन्योन्यसम्बन्धस्य परस्परसम्बन्धस्य, परिकल्पने कल्पनायाम् आनन्त्यम् अनन्तत्वम्। इयत्तया अपरिच्छेद्याः प्रभेदाः स्युरिति यावत्॥१२॥

दिङ्मात्रमिति। दिङ्मात्रं तूच्यते मार्गप्रदर्शनमात्रं क्रियते। येन मार्गप्रदर्शनेन, व्युत्पन्नानां लोकशास्त्रकाव्याद्यवेक्षणाद् व्युत्पत्तिमतां सचेतसां सहृदयानाम्। आसादितालोका बुद्धिः आसादितः सम्प्राप्तः, आलोकः प्रकाशः यस्याः तादृशी मतिः सर्वत्र सर्वेषु ध्वनिकाव्यप्रभेदेषु प्रकाशेत एकदेशप्रदर्शनेन सहृदयानां बुद्धिः सर्वत्र प्रसरिष्यतीत्यर्थः॥१३॥

अङ्गिनो व्यङ्ग्यत्वेन प्रधानस्य शृङ्गारस्य शृङ्गाररसतां प्राप्तस्यास्वादविषयस्य रत्याख्यस्य स्थायिनो भावस्य सर्वेष्वेव प्रभेदेषु सर्वेष्ववान्तरभेदेषु यत्नाद् यत्नमवलम्ब्य पृथक् प्रयत्नेनेति यावत्। एकरूपानुबन्धवान् एकरूपेण अनुबन्धेन युक्तः, अनुप्रासः शब्दगतोऽलङ्कारः, न प्रकाशकः न चमत्कारकृतः॥१४॥

**ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम्।**
**शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः॥१५॥**

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः॥१६॥**

**ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।**
**रूपकादिरलङ्कारवर्ग एति यथार्थताम्॥१७॥**

---

शृङ्गारे सम्भोगाख्ये, ध्वन्यात्मभूते प्रतीतमानतया प्रधानतया च ध्वनेः प्रकारभूते। यमकादिनिबन्धनम् 'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः, यमकम्' इति लक्षणलक्षितो यः शब्दालङ्कारो यमकाख्यः। तद्रूपाणां शब्दावृत्तिरूपाणाम् अलङ्काराणां निबन्धनं निबन्धः शक्तावपि कवेः तन्निबन्धने शक्तिमत्त्वेऽपि प्रमादित्वं प्रमाद एवानवधानतैवेति यावत्। विप्रलम्भे तु विप्रलम्भशृङ्गारे तु विशेषतः प्रमाद एवेत्यर्थः। चित्तवृत्तिरूपायाः द्रुतेः हेतुभूतं यन्माधुर्यं तस्य करुणे विप्रलम्भे शान्ते चोत्कर्षातिशयदर्शनाद् विप्रलम्भे यमकनिबन्धनमत्यन्तमनुचितमिति यावत्॥१५॥

रसाक्षिप्ततया रसाविनाभूतत्वेन, रसान्यथानुपपत्त्या वा, यस्याङ्गस्य बन्धो निबन्धः शक्यक्रियः कर्तुं शक्यः स्वयमेव कृतो भवेत् स्यात्। अपृथग्यत्ननिर्वर्त्यः अपृथग्यत्नेन पृथग्यत्नेन विनैव निर्वर्तयितुं शक्यः यो भवति, ध्वनौ प्रधानतया व्यङ्ग्ये रसे, स एवालङ्कारो मतः सम्मत इति यावत्॥१६॥

ध्वन्यात्मभूते प्राधान्येन व्यङ्ग्ये शृङ्गारे शृङ्गाररसे समीक्ष्य सम्यग्विज्ञाय, विनिवेशितः सन्निवेशितः, रूपकादिः, अलङ्कारवर्गः रूपकप्रभृतिः काव्यालङ्कारसमूहः, यथार्थताम् अन्वर्थत्वम् एति प्राप्नोति॥१७॥

**विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।**
**काले च ग्रहणत्यागौ नातिनिर्वहणैषिता॥१८॥**

**निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।**
**रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम् ॥१९॥**

**क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः।**
**शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः॥२०॥**

**आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।**
**यस्मिन्ननुक्तः शब्देन शब्दशक्त्युखवो हि सः॥२१॥**

---

अलङ्कारस्य रूपकादेः, तत्परत्वेन अलङ्कारतात्पर्येण, विवक्षा वक्तुमिच्छा। अङ्गित्वेन रसापेक्षयाप्राधान्येन, न विवक्षा। कदाचिदलङ्कारोऽङ्गित्वेनापि विवक्षितो दृश्यते। काले समुचिते समये, ग्रहणं प्रतिपादनम्, अनुचिते काले त्यागः। नातिनिर्वहणैषिता अत्यन्तं निर्वहणेच्छाभावः। नर्व्यिूढावपि निर्वहणविषयतासम्भवेऽपि अङ्गत्वे रूपकादेरङ्गत्वे अङ्गभावे, यत्नेन प्रयत्नतः। प्रत्यवेक्षणं समीक्षा। एष्वैककमपि रूपकादेरलङ्कारस्य अङ्गत्वसाधनोपायतां धत्त इत्यर्थः॥१८,१९॥

अस्य विवक्षितान्यपरवाच्यध्वनेः अनुस्वानसंनिभः घण्टायां वाद्यमानायां प्रधानशब्दप्रतीत्यनन्तरं यथा क्षोदीयानपरोऽनुरणनानुस्वान-प्रतिध्वन्यादिपदाभिधेयः शब्दविशेषः प्रतीयते तत्सन्निभस्तत्सदृशः। य आत्मा यः प्रकारः, क्रमेण पौर्वापर्येण, प्रतिभाति प्रतीयते सोऽपि विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमाख्यो यो भेदः सोऽपि शब्दार्थशक्तिमूलत्वात् शब्दशक्तिमूलत्वादर्थशक्तिमूलत्वाच्च, द्वेधा द्विप्रकारः। व्यवस्थितः द्वैविध्यं प्राप्त इत्यर्थः॥२०॥

हि यतः, यस्मिन् काव्ये, शब्देन वाचकशब्देन, अनुक्तोऽनभिहितः, अलङ्कारो रूपकोपमादिः, शब्दशक्त्या शब्दस्य द्वितीयार्थबोधनसामर्थ्यवशाद्, आक्षिप्त एव प्रतीयमान एव, प्रकाशते

**अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः स प्रकाशते।**
**यस्तात्पर्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः॥२२॥**

**शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः।**
**यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः॥२३॥**

**प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः।**
**अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः॥२४॥**

**अर्थशक्तेरलङ्कारो यत्राप्यन्यः प्रतीयते।**

---

प्रकटो भवति, स शब्दशक्त्युद्भवः शब्दशक्तिमूलध्वनिरित्युच्यते॥२१॥

य: अर्थ: तात्पर्येण वक्तुरिच्छया, स्वतः स्वस्मादेव शब्दात् उक्तिं विनाभिधानं विना, अन्यद् वस्तु वस्त्वन्तरं व्यनक्ति व्यञ्जनया बोधयति। सोऽर्थः, यत्र यस्मिन् काव्ये, प्रकाशते प्रतीयते, स तु अन्यः शब्दशक्तिमूलादितरः, अर्थशक्त्युद्भवः अर्थशक्तिमूलो ध्वनिरिति समाम्नात इति शेषः॥२२॥

यत्र यस्मिन् काव्ये शब्दार्थशक्त्या शब्दशक्त्या, अर्थशक्त्या, उभयशक्त्या वा आक्षिप्तः व्यञ्जनाव्यापारगम्यः, व्यङ्ग्यः प्रतीयमानः अर्थः, कविना पुनः स्वोक्त्या कविवचनेन आविष्क्रियते प्रकाश्यते, सा ध्वनेरन्या अलङ्कृतिः, ध्वनिव्यपदेशविषयतारहितोऽलङ्कारः। न तत्र ध्वनिः, किन्तु अलङ्कार एवेत्युच्यते। व्यञ्जनाव्यापारविषयीभूतोऽपि सोऽर्थालङ्कारव्यपदेशं लभत इत्यर्थः॥२३॥

अन्यस्य वाच्यातिशायिचमत्कृतिजनकस्य वाच्यादन्यस्य, वस्तुनः अर्थस्य, दीपकः दीप इव प्रकाशकः। अर्थोऽपि व्यञ्जकः वाच्योऽर्थोऽपि। प्रौढोक्तिमात्रनिष्पन्नशरीरः, कवेः प्रतिभावतः, प्रौढोक्तिमात्रेण, निष्पन्नं शरीरं स्वरूपं यस्य तादृशः कविकल्पितः, स्वतःसम्भवी चेति द्विविधः द्विप्रकारः ज्ञेयः ज्ञातव्यः॥२४॥

यत्रापि यस्मिन् काव्येऽपि, अर्थशक्तेः अर्थस्य सामर्थ्याद्, अन्यः वाच्यादलङ्कारादन्यः, अलङ्कारः प्रतीयते व्यज्यते, सोऽर्थशक्ति-

**अनुस्वानोपमव्यङ्ग्यः प्रकारोऽपरो ध्वनेः॥२५॥**

**रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः।**
**स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः॥२६॥**

**अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।**
**तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः॥२७॥**

**शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम्।**
**तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः॥२८॥**

---

मूलध्वन्यात्मकः शब्दसन्दर्भः। अनुस्वानोपमव्यङ्ग्यः अनुस्वानेन अनुरणनेन, उपमा सादृश्यं यस्य तादृशं व्यङ्ग्यं व्यङ्ग्योऽर्थः यस्य तादृशः, ध्वनेः काव्यविशेषस्य, अपरः प्रकारः अन्यो भेदः॥२५॥

वाच्यताम् अभिधेयत्वं, श्रितः प्राप्तः, रूपकादिः रूपकम् आदिर्यस्य तादृशः, अलङ्काराणां गणः, सर्वः अपि सकलः अपि, अलङ्कारवर्गः, गम्यमानत्वं प्रतीयमानत्वं, बिभ्रद् वहन्, भूम्ना बाहुल्येन, प्रदर्शितः अन्यैः अलङ्कारशास्त्रकारैरिति शेषः॥२६॥

अलङ्कारान्तरेषु वाच्यादतिरिक्तेषूपमाद्यलङ्कारेषु तु, अनुरणनरूपालङ्कारप्रतीतौ सत्यामपि अनुस्वानात्मकत्वेनालङ्काराणां प्रतीयमानत्वेऽपि, यत्र यस्मिन् काव्ये, वाच्यस्य वाच्यार्थस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन व्यङ्ग्यार्थप्रतीतिजननानुकूल्येन, चारुत्वं चमत्कारः, न प्रकाशते न भासते, नासौ ध्वनेर्मार्गः॥२७॥

येषामलङ्काराणां, वाच्यत्वे शक्तिजन्यबोधविषयत्वे, शरीरीकरणम् अशरीराणामपि कटककुण्डलादितुल्यतया शरीरोपकारकाणां शरीरत्वापादनं, न व्यवस्थितं, ते ध्वन्यङ्गतां ध्वनेरङ्गत्वं, गताः प्राप्ताः, परामुत्कृष्टां छायां यान्ति प्राप्नुवन्ति॥२८॥

**व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा।**
**ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्॥२९॥**

**अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत्।**
**चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते॥३०॥**

**यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन भासते।**
**वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः॥३१॥**

---

यदा वस्तुमात्रेण, अलङ्कारभिन्नेन वस्तुना व्यञ्जकेनेत्यर्थः। अलङ्कृतयोऽलङ्काराः, व्यज्यन्ते, तदातासामलङ्कृतीनां ध्वन्यङ्गता ध्वन्यात्मकत्वम्। अत्र हेतुमाह—काव्यवृत्तेरिति। काव्यवृत्तेः काव्यपदप्रवृत्तिः तदाश्रयाद् यतः सोऽलङ्काररूपो व्यङ्ग्योऽर्थः तमाश्रित्यैव काव्यपदप्रवृत्तिः वर्तते तत इत्यर्थः॥२९॥

यासामलङ्कृतीनां वस्तुमात्रेण व्यङ्ग्यानां प्राधान्ये ध्वन्यङ्गता, तासामेवालङ्कृतीनाम् अलङ्कारान्तरव्यङ्ग्यभावे अलङ्कृत्यन्तरेण व्यङ्ग्यभावे व्यङ्ग्यत्वे सति, चारुत्वोत्कर्षतः चारुत्वस्य रामणीयकस्य उत्कर्षात्। व्यङ्ग्यप्राधान्यं व्यङ्ग्यस्य तस्यालङ्कारस्य प्राधान्यम्। यदि लक्ष्यते यदि दृश्यते, तदा धवन्यङ्गता ध्वनिविषयत्वं भवेत्। वाच्येन वस्तुना वालङ्कारस्य व्यङ्ग्यतायामिव वाच्येनालङ्कारेण अलङ्कारान्तरस्य व्यङ्ग्यतायामपि तस्य वाच्यातिशायिचमत्कृतिजनकत्वं यद्यस्ति तर्हि सोऽपि अर्थशक्तिमूलानुरणनध्वनेर्विषयो भवतीत्यर्थः॥३०॥

यत्र काव्ये प्रतीयमानो व्यङ्ग्योऽर्थः, प्रम्लिष्टत्वेन अस्फुटत्वेन अपि किं च, वाच्यस्याभिधेयस्यार्थस्य, अङ्गतया अङ्गत्वेन वा, भासते प्रतीतिविषयो भवति, असौ व्यङ्ग्योऽर्थः, ध्वनेः न गोचरः ध्वनिविषयो न भवितुमर्हति॥३१॥

**अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः।**
**शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः॥३२॥**

**सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम्।**
**यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम्॥३३॥**

---

अव्युत्पत्तेः निपुणतारहितत्वेन अशक्तेः शक्तिराहित्येन च काव्यस्योद्भवे समुल्लासे च हेतुभूताभ्यां शक्तिव्युत्पत्तिभ्यां विना तद्रहितस्य कवेः, स्खलद्गतेः स्खलन्ती, अप्रभवन्ती गतिः अर्थान्तरबोधनसामर्थ्यं यस्य तादृशस्य, उपचरितस्य शब्दस्य यो निबन्धः निबन्धनं स, सूरिभिः काव्यवासनापरिपक्वबुद्धिभिः, ध्वनेर्विषय इति न मतः नानुमन्यते।

अङ्गिभूतस्य प्रधानभूतस्य, व्यङ्गस्य प्रतीयमानस्यार्थस्य, सर्वेष्वेव प्रभेदेषु, सकलेषु ध्वनिप्रभेदेषु, स्फुटत्वेन अम्लिष्टत्वेन, अवभासनं प्रतिभानं, यत् तत् पूर्णं ध्वनिलक्षणं पूर्णतां प्राप्तं ध्वनेर्लक्षणं, यत एवं ततः स्खलद्गतेः शब्दस्य निबन्धने ध्वनित्वं नास्ति। ध्वनेः स्फुटत्वेनावभासनमेव तल्लक्षणं, तस्य प्रमाणमित्यर्थः॥३२॥

## तृतीय उद्द्योतः

अविवक्षितवाच्यस्य पदवाक्यप्रकाश्यता।
तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः॥१॥

यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु।
वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते॥२॥

शषौ सरेफसंयोगो ढकारश्चापि भूयसा।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युतः॥३॥

त एव नु निवेश्यन्ते बीभत्सादौ रसे यदा।
तदा तं दीपयन्त्येव तेन वर्णा रसच्युतः॥४॥

---

## अथ तृतीय उद्द्योत

अविवक्षितवाच्यस्य लक्षणामूलस्य, तदन्यस्य तद्भिन्नस्य, अनुरणनरूपव्यङ्ग्यस्य शब्दशक्तिमूलस्य, ध्वनेश्च सर्वविधस्यापि ध्वनेः पदवाक्यप्रकाशता पदप्रकाशता वाक्यप्रकाशता चेत्यर्थः। क्वचिदेकेनैव पदेन, क्वचिच्च वाक्येन व्यङ्ग्योऽर्थः प्रकाशत इत्यर्थः॥१॥

अलक्ष्यक्रमव्यङ्ग्यः असंलक्ष्यक्रमव्यङ्ग्याभिधः यो ध्वनिः काव्यविशेषः, सः वर्णपदादिषु अर्थात् वर्णे, पदे, आदिपदात् पदावयवे च। वाक्ये पदसमूहात्मके, सङ्घटनायां प्रबन्धेऽपि च दीप्यते प्रकाशत इत्यर्थः॥२॥

भूयसा बाहुल्येन, (असकृत्) शकारषकारौ। सरेफसंयोगः रेफसंयोगेन सह वर्तत इति तादृशः। पूर्वमध उभयत्र च रेफेण सहितो वर्णः। एते शृङ्गारे शृङ्गाररसव्यञ्जनविरोधिनः। तेन वर्णा एते

**असमासा समासेन मध्यमेन च भूषिता।**
**तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता॥५॥**

**गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।**
**रसांस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः॥६॥**

**विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति।**
**काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा॥७॥**

---

रसच्युतः रसात् च्यवन्ते भ्रश्यन्ति इति तादृशाः, स्युर्भवेयुः। तु किन्तु, त एव वर्णाः पूर्वोक्ताः, बीभत्सादौ रसे बीभत्से, वीरे, रौद्रे च। यदा निवेश्यन्ते निबध्यन्ते तदा तं रसं दीपयन्त्येव प्रकाशयन्त्येव। तेन वर्णाः रसच्युतो रसासेचनका भवन्तीत्यर्थः॥३,४॥

असमासा समासरहिता। मध्यमेन समासेन अल्पसमासेन भूषिता अलङ्कृता च। तथा दीर्घसमासा चेति सङ्घटना त्रिविधा उदिता उक्ता कैश्चिदिति कर्तृनिर्देशः॥५॥

शृङ्गारादिरसानुगुणेषु वर्णेषु विद्यमानो माधुर्यादिगुणः, तादृशवर्णसमुदायरूपेषु पदेषु व्यस्ततया समस्ततया वा तत्तद्रसानुगुण्येन तिष्ठन्ती योजना, सङ्घटनेत्युच्यते। तदेवोक्तं सा सङ्घटना रसादीन् व्यनक्ति गुणानाश्रित्य तिष्ठन्तीति। तन्नियमे तस्याः संघटनाया नियमे वक्तृवाच्ययोः वक्तुर्वाच्यस्य च औचित्यं हेतुः कारणमित्यर्थः॥६॥

विषयः शब्दसन्दर्भात्मकः आश्रयः यस्य तादृशम्। अन्यदपि औचित्यम् औचित्यान्तरमपि तां सङ्घटनां नियच्छति नियमयति। हि यतः सा सङ्घटना काव्यप्रभेदाश्रयतः काव्यस्य प्रभेदानाश्रित्य भेदवती स्थिता भिन्नैवावतिष्ठत इत्यर्थः। वक्तृवाच्यगतौचित्ये वक्तुः वाच्यस्य चानुरोधेन यदौचित्यं तस्मिन् सत्यपि विद्यमानेऽपि विषयाश्रयं काव्यप्रभेदानाश्रित्य विद्यमानमौचित्यमपि सङ्घटनां नियच्छति सङ्घटनाया नियमे कारणं भवतीत्यर्थः॥७॥

**एतद्यथोक्तमौचित्यमेव तस्या नियामकम्।**
**सर्वत्र गद्यबन्धेऽपि छन्दोनियमवर्जिते॥८॥**

**रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।**
**रचना विषयापेक्षं तत्तु किञ्चिद्विभेदवत्॥९॥**

**विभावभावानुभावसञ्चार्यौचित्यचारुणः ।**
**विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य च॥१०॥**

---

तस्याः सङ्घटनायाः, यथोक्तं यथा इदानीमुक्तम्, औचित्यमेव, छन्दोनियमवर्जिते वृत्तनियमशून्ये, सर्वत्र गद्यबन्धेऽपि गद्यकाव्ये सर्वत्रापि, नियामकं नियमहेतुः॥८॥

रसबन्धोक्तमौचित्यं, सर्वत्र गद्यप्रबन्धे संश्रिता आश्रिता, रचना संघटना, भाति प्रकाशते। तत्तु विषयापेक्षं विषयाश्रितमौचित्यं तु किञ्चिद् विभेदवत् अल्पीयान् भेदो वर्त्तत इत्यर्थः॥९॥

प्रबन्धस्य प्रबन्धात्मकस्य, कविव्यापारस्य, रसादीनां व्यञ्जकत्वे, रसाद्यभिव्यञ्जकतायां, निबन्धनं निदानमित्यर्थः। क्रमेणाह- विभावानुभावेति। (१) विभावस्य आलम्बनोद्दीपनात्मकस्य, भावस्य देवादिविषयाया रतेः, विभावानुभावाभिव्यक्तस्य व्यभिचारिणः। अनुभावस्य कटाक्षविक्षेपादेः, सञ्चारिणः व्यभिचारिभावस्य च, औचित्येन उचिततया योजनेन, चारुणः सहृदयहृदयाह्लादकस्य, वृत्तस्य स्वतः सम्भविनः, उत्प्रेक्षितस्य कविकल्पितस्य वा, कथाशरीरस्य कथावस्तुनः, विधिः विधानम् एकं निबन्धनम्। (२) इतिवृत्तवशायाताम् इतिवृत्तवशेन इतिवृत्ताधीनतया, आयातामुपस्थिताम्। अननुगुणाम् आनुगुण्यरहितां, स्थितिमवस्थानम्। त्यक्त्वा विहाय, उत्प्रेक्ष्यापि कल्पितत्वेनापि अन्तरा मध्ये, अभीष्टरसोचितकथोन्नयः अभीष्टस्याभिमतस्य, रसस्योचितायाः कथायाः उन्नयः उन्नयनं द्वितीयं निबन्धनम्। (३) सन्धिसन्ध्यङ्गघटनं सन्धीनां सन्ध्यङ्गानां च घटनं संयोजनम्, रसाभिव्यक्त्यपेक्षया रसानामभिव्यक्तेरानुगुण्येन कर्तव्यम्। तु किन्तु। केवलया शास्त्रस्थितिसम्पादनेच्छया शास्त्रमर्यादायाः

इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम्।
उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयः ॥११॥

सन्धिसन्ध्यङ्गघटनं, रसाभिव्यक्त्यपेक्षया।
स तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥१२॥

उद्दीपनप्रशमने यथावसरमन्तरा।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ॥१३॥

अलङ्कृतीनां शक्तावप्यानुरूपेण योजनम्।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्॥१४॥

अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित्॥१५॥

सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्॥१६॥

---

सम्पादनाभिलाषमात्रेण न कर्तव्यमित्यर्थः। (४) अन्तरा मध्ये, यथावसरम् अवसरोचिततया, उद्दीपनप्रशमने उद्दीपनं प्रशमनं च विधेयम्। (५) आरब्धविश्रान्तेः आरब्धस्य प्रबन्धस्य विश्रान्तिपर्यन्तम्, अङ्गिनः प्रधानस्य रसस्य अनुसन्धानम् अनुवृत्तता। (६) शक्तावपि शक्तिमत्त्वेऽपि, अलङ्कृतीनाम् अलङ्काराणाम् आनुरूप्येण औचित्येन योजनमायोजनम्। एतानि निबन्धनानीत्यर्थः॥१०,११,१२,१३,१४॥

अनुस्वानोपमात्मापि अनुरणनध्वनिरूपः अस्य ध्वनेः विवक्षितान्यपरवाच्यध्वनेः, यः प्रभेदः शब्दशक्त्युद्भवत्वेन, अर्थशक्त्युद्भवत्वेन च द्विप्रकारः उदाहृतः, सोऽपि अनुरणनध्वनिरूपः संलक्ष्यक्रमोऽपि केषुचित् प्रबन्धेषु, न तु सर्वेषु, भासते प्रकाशते॥१५॥

क्वचित् स्थलविशेषेषु सुप्तिङ्वचनसम्बन्धः, सुपः स्वौजसादयः, तिङः तिब्तसादयः, विभक्तयः, वचनानि एकवचनादयः, सम्बन्धाः षष्ठ्यर्थाः, स्वत्वादयः, तैः, तथा कारकशक्तिभिः

**प्रबन्धे मुक्तके वापि रसादीन् बन्धुमिच्छता।**
**यत्नः कार्यः सुमतिना परिहारे विरोधिनाम्॥१७॥**

**विरोधिरससम्बन्धिविभावादिपरिग्रहः ।**
**विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम्॥१८॥**

**अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्।**
**परिपोषं गतस्यापि पौनःपुन्येन दीपनम्।**
**रसस्य स्याद् विरोधाय वृत्त्यनौचित्यमेव च॥१९॥**

**विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम्।**
**बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला॥२०॥**

---

कर्तृकर्मकरणसम्प्रदानापादानाधिकरणत्वरूपाभिः कृत्तद्धितसमासैश्च कृद्भिः धातुभ्यो निष्पन्नैः, तद्धितैः नामभ्यो निष्पन्नैश्च प्रत्ययः, समासैश्च। अलक्ष्यक्रमः अलक्ष्यक्रमव्यङ्ग्यो ध्वनिः द्योत्यः प्रकाश्यो भवति॥१६॥

प्रबन्धे मुक्तके वापि रसादीन् रसभावादीन्, बन्धुं निबन्धुमिच्छता अभिलषता, कविना, सुमतिना सहृदयेन, विरोधिनां मिथो विरोधवतां रसानां परिहारे अपनयने, यत्नः प्रयत्नः, कार्यः विधेयः॥१७॥

विभावभावानुभावेत्यादिना प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनानि यान्युक्तानि तद्विरुद्धानि परिहर्तव्यानीति इदानीं प्रतिपाद्यते। विरोधिरससम्बन्धिनां विभावादीनां परिग्रहः वर्णनम् अन्वितस्यापि अन्यस्य वस्तुनः इतिवृत्तस्य विस्तरेण दीपनं प्रकाशनम्। अकाण्डे अस्थान एव रसस्य विच्छित्तिः विच्छेदः, अकाण्डे अस्थाने प्रकाशनम् च। परिपोषं पुष्टिं गतस्य प्राप्तस्यापि रसस्य पौनः पुन्येन मुहुर्मुहुः दीपनं प्रकाशनं, वृत्त्यनौचित्यं च वृत्तीनामनौचित्यं च रसस्य विरोधाय स्यात्॥१८,१९॥

तु किन्तु, विवक्षिते वक्तृतात्पर्यविषयीभूते रसे लब्धप्रतिष्ठे

**प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।**
**एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता॥२१॥**

**रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः।**
**नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः॥२२॥**

**कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।**
**तथा रसस्यापि विधौ विरोधो नैव विद्यते॥२३॥**

**अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे।**
**परिपोषं न नेतव्यस्तथा स्यादविरोधिता॥२४॥**

---

प्रतिष्ठां प्राप्ते सति, बाध्यानामङ्गभावं वा प्राप्तानां विरोधिनां रसानामुक्तिर्वर्णनम्। अच्छला न दोषमावहति॥२०॥

प्रबन्धानां काव्यनाटकादीनां नानारसनिबन्धने नानारसानां बहूनां रसादीनां समावेशने प्रसिद्धेऽपि, तेषां काव्यनाटकादीनाम् उत्कर्षं प्रकर्षम्, इच्छताभिलषता कविना एको रसोऽङ्गीकर्तव्यः अङ्गित्वेनैको रसः निबन्धनीयः॥२१॥

प्रस्तुतस्य प्राधान्येन विवर्णयिषितस्य रसस्य शृङ्गारादेः रसान्तरसमावेशः रसान्तराणामन्येषां रसानां समावेशः निबन्धनम्। स समावेशः स्थायित्वेनावभासिनः भासमानस्य अस्य प्रस्तुतरसस्य, अङ्गितामङ्गित्वं नोपहन्ति न निरुणद्धि॥२२॥

प्रबन्धस्य काव्यनाटकादेः, व्यापि सर्वप्रबन्धव्यापनशीलम्, एकं कार्यं, कथावस्तु, विधीयते क्रियते। तथा रसस्यापि, व्यापकस्य विधौ, विरोधो न विद्यते नास्तीत्यर्थः॥२३॥

रसान्तरे अन्यस्मिन् रसे अङ्गिनि प्रधाने सति, अविरोधी मिथो विरोधशून्यः, विरोधी वा रसः, परिपोषं पुष्टिं, न नेतव्यः न प्रापणीयः, तथा चेत् अविरोधिता विरोधपरिहारः स्यादेव॥२४॥

**विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनो भवेत्।**
**स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता॥२५॥**

**एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्।**
**रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा॥२६॥**

**रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।**
**निवर्तते हि रसयोः समावेशे विरोधिता॥२७॥**

**विरोधमविरोधं च सर्वत्रेत्थं निरूपयेत्।**
**विशेषतस्तु शृङ्गारे सुकुमारतमो ह्यसौ॥२८॥**

---

यस्तु आस्वाद्यमानः स्थायी विरुद्धैकाश्रयः विरुद्ध एक आश्रयो यस्य तादृशः स स्थायी विभिन्नाश्रयः विभिन्नः आश्रयः यस्य तथाविधः कार्यः करणीयः। अतस्तस्य स्थायिनः पोषेऽपि परिपोषवर्णनेऽपि, अदोषता स्याद् दोषः परिहृतो भवति॥२५॥

एकाश्रयत्वे एकाधिकरणवृत्तित्वे दैशिकसामानाधिकरण्य इति यावत्। निर्दोषः दोषरहितः, नैरन्तर्ये कालिकसामानाधिकरण्ये, विरोधवान् अव्यवधानेन एककालवृत्तित्वरूपविरोधमापन्नः व्यङ्ग्यः प्रतीयमानो रसो रत्यादिः सुमेधया सुहृदयेन रसान्तरव्यवधिना अन्यस्य रसस्य व्यवधानेन कल्पयितव्यः॥२६॥

एकवाक्यस्थयोरपि एकस्मिन् वाक्ये स्थितयोरपि रसयोः विरुद्धयोर्द्वयो रसयोः, रसान्तरितयोः रसान्तरेण अन्येन केनचिदविरोधिना रसेन अन्तरितयोः समावेशे निबन्धेन विरोधिता विरोधो निवर्तते परिहृतो भवति॥२७॥

इत्थं पूर्वोक्तप्रकारेण। सर्वत्र रसयोर्विरोधम्, अविरोधं, तत्परिहारं च निरूपयेत्। तु किन्तु, शृङ्गारे रसे, विशेषतः विरोधपरिहारो निरूपणीयः। हि यतः, असौ शृङ्गारः सुकुमारतमः अतिशयसौकुमार्य-वान्नस्ति॥२८॥

अवधानातिशयवान् रसे तत्रैव सत्कविः।
भवेत्तस्मिन् प्रमादो हि झटित्येवोपलक्ष्यते॥२९॥

विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति॥३०॥

विज्ञायेत्थं रसादीनामविरोधविरोधयोः।
विषयं सुकविः काव्यं कुर्वन्मुह्यति न क्वचित्॥३१॥

वाच्यानां वाचकानां च यदौचित्येन योजनम्।
रसादिविषयेणैतत् कर्म मुख्यं महाकवेः॥३२॥

रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।

---

अतः सत्कविः तत्रैव रसे शृङ्गारे, एव रसे, अवधानातिशयवान् भवेत् अतिशयितमवधानं कुर्यात्। हि यतः, तस्मिन् अतिशयित-सौकुमार्यवति शृङ्गारे रसे, प्रमादः अनवधानता, झटित्येव शीघ्रमेव उपलक्ष्यते प्रकटीभवति॥२९॥

विनेयान् उन्मुखीकर्तुं शिष्याणाम् आभिमुख्यसम्पादनार्थं, काव्यशोभार्थमेव वा काव्यस्य शोभातिशयमाधातुं वा, तदङ्गानां शृङ्गार-रसाङ्गभूतानां तद्विरुद्धरसस्पर्शः तस्य शृङ्गारस्य विरुद्धो यो रसः आस्वाद्यमानः स्थायी तस्य स्पर्शः सम्बन्धः न दुष्यति न दोषमावहति॥३०॥

इत्थम् एवं रसादीनां रसभावादीनाम् अविरोध- विरोधयोः अविरोधस्य विरोधस्य च विषयं विज्ञाय सम्यग् ज्ञात्वा काव्यं कुर्वन् कविः क्वचिदपि कुत्रापि न मुह्यति॥३१॥

वाच्यानामभिधेयानां, वाचकानां शब्दानां च रसादिविषये-णौचित्येन यद् योजनम्, एतद् योजनात्मकं कर्म, महाकाव्यकर्तुर्मुख्यं भवति॥३२॥

अर्थशब्दयोः अर्थस्य वाच्यस्य, शब्दस्य वाचकस्य च,

**औचित्यवान्यस्ता एता वृत्तयो द्विविधाः स्थिताः॥३३॥**

**प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।**
**यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत्॥३४॥**

**प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः।**
**ये च तेषु प्रकारोऽयमेव योज्यः सुमेधसा॥३५॥**

**वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति।**
**प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते॥३६॥**

**मुख्या महाकविगिरामलङ्कृतिभृतामपि।**

---

रसाद्यनुगुणत्वेन रसभावाद्यनुगुण्येन, औचित्यवान् यो व्यवहारः निबन्धनं काव्ये, ता एता वृत्तयो द्विविधाः स्थिताः॥३३॥

यत्र यस्मिन् काव्ये, व्यङ्ग्यस्य व्यङ्ग्यार्थस्य, अन्वये योगे सति, वाच्यचारुत्वं वाच्यस्य वाच्यार्थस्य चारुत्वं चमत्कृतिजनकत्वं प्रकर्षवत् प्रकृष्टं स्याद् भवेत्, सोऽयं गुणीभूतव्यङ्ग्याख्यः अन्यः अपरः (द्वितीयः) काव्यस्य प्रकारः काव्यभेदः, दृश्यते॥३४॥

प्रसन्नगम्भीरपदाः प्रसन्नानि प्रसादगुणयुक्तानि, गम्भीराणि व्यङ्ग्यार्थप्रकाशनाद् गाम्भीर्ययुक्तानि च पदानि येषु तादृशाः सुखावहाः सहृदयाह्लादजनकाः, ये काव्यबन्धाः, रमणीयार्थप्रतिपादकशब्दसन्दर्भाः, तेषु काव्येषु, अयमेव प्रकारो गुणीभूतव्यङ्ग्याख्यः सुमेधसा सुधिया कविना, योज्य आयोजनीयः॥३५॥

अयं वाच्यालङ्कारवर्गः वाच्यानामलङ्काराणाम् उपमादीनां वर्गः व्यङ्ग्यांशानुगमे सति व्यङ्ग्यस्य प्रतीयमानार्थस्य अनुगमे सम्बन्धे सति परामुत्कृष्टां छायां चारुतां, बिभ्रद् दधानः, प्रायेण भूम्ना, लक्ष्ये निरीक्ष्यते एव दृश्यत एव॥३६॥

अलङ्कृतिभृतामपि सालङ्काराणामपि, महाकविगिरां महाकविवचनानाम् एषानन्तरोक्ता, प्रतीयमानच्छाया व्यङ्गयार्थसंस्पर्शेन

**प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्।।३७।।**
**अर्थान्तरगतिः काक्वा, या चैषा परिदृश्यते।**
**सा व्यङ्ग्यस्य गुणीभावे, प्रकारमिममाश्रिता।।३८।।**
**प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते।**
**विधातव्या सहृदयैर्न तत्र ध्वनियोजना।।३९।।**
**प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।**
**धत्ते रसादितात्पर्यपर्यालोचनया पुनः।।४०।।**
**प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।**
**काव्ये उभे ततोऽन्यद् यद् चित्रमित्यभिधीयते।।४१।।**

---

या कान्तिः सा योषितामङ्गनानां, लज्जेव त्रपेव, मुख्या प्रधानभूता भूषा भूषणं भवति।।३७।।

काक्वा ध्वनेर्विकारेण, या चैषा अर्थान्तरगतिः अर्थान्तरस्य व्यङ्ग्यस्यावगतिः परिदृश्यते सा अर्थान्तरगतिः व्यङ्ग्यस्य गुणीभावे सति, प्रतीयमानार्थस्याप्राधान्ये सति इमं प्रकारं गुणीभूतव्यङ्ग्याख्यं काव्यप्रकारम् आश्रिता आश्रित्य वर्तत इत्यर्थः।।३८।।

यश्च व्यङ्ग्योऽर्थः युक्त्या चारुत्वप्रतीतितारतम्यपर्यालोचनया, अस्य गुणीभूतव्यङ्ग्यात्मकस्य प्रभेदस्य काव्यप्रकारस्य, विषयः प्रतीयते विषयत्वेनावगम्यते। तत्र सहृदयैर्ध्वनियोजना ध्वनिसंज्ञाया आयोजनं, न विधातव्या न कर्तव्यमित्यर्थः।।३९।।

गुणीभूतव्यङ्ग्योऽपि, अयं काव्यस्य प्रकारः, रसादितात्पर्य-पर्यालोचनया पुनः, रसादीनां रसभावदीनां, तात्पर्यस्य वक्तृविवक्षि-तत्वस्य पर्यालोचनायां तु, ध्वनिरूपत्वं धत्ते भजते ध्वनिव्यपदेशविषयो भवति।।४०।।

एवमुक्तप्रकारेण व्यङ्ग्यस्य प्रतीयमानार्थस्य प्रधानगुणभावाभ्यां प्राधान्येन गुणीभूतत्वेन च, उभे काव्ये व्यङ्ग्यस्य प्राधान्ये ध्वनिरिति,

**चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्।**
**तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्॥४२॥**

**सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः।**
**सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा॥४३॥**

**एवं ध्वनेः प्रभेदाः प्रभेदभेदाश्च केन शक्यन्ते।**
**सङ्ख्यातुं दिङ्मात्रं तेषामिदमुक्तमस्माभिः॥४४॥**

**इत्युक्तलक्षणो यो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः।**
**सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः॥४५॥**

---

गुणीभावे गुणीभूतव्यङ्ग्यमिति च, द्वे कविकर्मणी व्यवस्थिते। ततस्ताभ्यामन्यद् यत् काव्यं तच्चित्रमित्यभिधीयते उच्यते॥४१॥

चित्रं च शब्दार्थभेदेन द्विविधं–शब्दचित्रम् अर्थचित्रं चेति द्विप्रकारं व्यवस्थितम्। तत्र चित्रयोः मध्ये किञ्चत् शब्दचित्रम्, अतः परम् अन्यत् वाच्यचित्रं च भवति॥४२॥

स ध्वनिः सगुणीभूतव्यङ्ग्यैः सगुणीभूतव्यङ्ग्यैः गुणीभूतव्यङ्ग्यस्य ये प्रकारास्तैः सह वर्त्तन्त इति तादृशैः, स्वैः स्वकीयैः अविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वादिभिः प्रभेदैः सह संसृष्टिसङ्कराभ्यां संसृष्ट्या एकरूपया, अनुग्राह्यानुग्राहकभाव-सन्देहैकवाचकानुप्रवेशरूपेण त्रिविधेन सङ्करेण च, पुनरपि बहुधानेकविधः उद्द्योतते प्रकाशते॥४३॥

एवमुक्तप्रकारेण ध्वनेः प्रभेदाः प्रभेदभेदाश्च अवान्तरभेदाश्च, संख्यातुं गणयितुं केन शक्यन्ते। न कश्चिदपि शक्नोति इत्यर्थः। अतः अस्माभिः दिङ्मात्रं मार्गप्रदर्शनमात्रमिदमुक्तम्॥४४॥

उक्तलक्षणम् उक्तं लक्षणं यस्य तादृशः, यो ध्वनिः स सत्काव्यम् उत्तमं काव्यं, कर्तुं वा ज्ञातुं वा, अभियुक्तैरुद्युक्तैः कविभिः सहृदयैश्च, प्रयत्नतः सम्यग् विवेच्यः विविच्य ज्ञातव्यः॥४५॥

**अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम्।**
**अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः॥४६॥**

**शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः।**
**वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे॥४७॥**

## इति तृतीय उद्द्योतः

---

यथोदितम् एतावता प्रबन्धेन, उक्तमभिहितम्। एतत् काव्यतत्त्वं काव्यस्य काव्यपदव्यपदेशविषयत्वम्, अस्फुटस्फुरितम् अस्फुटं स्पष्टं यथा न स्यात् तथा स्फुरितं स्फुरणं यस्य तादृशं व्याकर्तुं व्याख्यातुं अशक्नुवद्भिः अशक्तैः कैश्चित्, रीतयः विशिष्टा पदरचना रीतिरिति लक्षणलक्षिताः सम्प्रवर्तिताः॥४६॥

शब्दतत्त्वाश्रयाः, शब्दधर्ममाश्रित्य वर्तमानाः काश्चित्, अपरा अन्याः, अर्थतत्त्वयुजः अर्थधर्ममाश्रिताश्च वृत्तयः अस्मिन् काव्यलक्षणे ज्ञाते सति प्रकाशन्ते॥४७॥

## चतुर्थ उद्द्योतः

ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रकाशितः।
अनेनानन्त्यमायाति कवीनां प्रतिभागुणः॥१॥

अतो ह्यन्यतमेनापि प्रकारेण विभूषिता।
वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि॥२॥

युक्त्यानयानुसर्तव्यो रसादिर्बहुविस्तरः।
मिथोऽप्यनन्ततां प्राप्तः काव्यमार्गो यदाश्रयात्॥३॥

---

## चतुर्थ उद्द्योतः

सगुणीभूतव्यङ्ग्यस्य गुणीभूतव्यङ्ग्येन सहितस्य ध्वनेः ध्वनिगुणीभूतव्यङ्ग्ययोः। यः अध्वा मार्गः प्रदर्शितः निरूपणेन प्रकाशितः, अनेन ज्ञायमानेन (ज्ञानविषयेण) ध्वनिना। यद्वा ध्वनितत्त्वज्ञानेन, कवीनां प्रतिभागुणः शक्त्यात्मकः आनन्त्यमनन्त-रूपताम् आयाति प्राप्नोति। तदेवाह—य इति। ध्वनेः गुणीभूतव्यङ्ग्यस्य च मार्गः य एष प्रकाशितः तस्य कविप्रतिभानन्त्यात्मकमन्यदपि फलमस्ति॥१॥

अतः प्रतिभानन्त्यसम्पादनात् ध्वनेः उक्तप्रभेदमध्याद् उक्ता ये प्रभेदास्तेषां मध्याद् अन्यतमेनापि एकेनापि, विभूषिता सती, भूषिता सती कवेः काव्यरूपा वाणी, पुरातनकविनिबद्धार्थसंस्पर्शवत्यपि पुरातनैः पुराणैः, वाल्मीकिप्रभृतिभिः कविभिः निबद्धेन प्रतिपादितेनार्थेन सह संस्पर्शं प्राप्तापि, नवत्वं नूतनतामायाति॥२॥

यदाश्रयात् यस्य रसादेराश्रितत्वेन, बहुविस्तरः बहुप्रकारः काव्यमार्गः ध्वनिमार्गः, मिथः परस्परमपि अनन्ततामानन्त्यं प्राप्तः, स

**दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः॥४॥**

**व्यङ्ग्यव्यञ्जकभावेऽस्मिन् विविधे सम्भवत्यपि।**
**रसादिमय एकस्मिन् कविः स्यादवधानवान्॥५॥**

**ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात्।**
**न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः॥६॥**

**अवस्थादेशकालादिविशेषैरपि जायते।**
**आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः॥७॥**

---

रसादिः रसभावादिः, अनया युक्त्या, एतावतोक्तप्रकारेण, अनुसर्तव्यः कविवाण्या नवत्वप्रतिपत्त्यर्थम् अन्यतमस्यापि ध्वनिभेदस्य, निबन्धनं करणीयमिति॥३॥

काव्ये कविप्रयुक्तशब्दसन्दर्भात्मके, दृष्टपूर्वाः पूर्वं ज्ञाताः, पुरातनकविवर्णिततत्वेन ज्ञानविषयीभूताः, सर्वेऽपि अर्थाः वर्णितविषयाः रसपरिग्रहात् रसादीनां व्यङ्ग्यानां व्यञ्जनाद् मधुमासे वसन्तकाले दृष्टपूर्वाः पूर्वं वसन्तादवलोकिताः द्रुमा वृक्षा इव नवत्वं नवीनतां प्राप्ता इति आभान्ति शोभन्ते॥४॥

अस्मिन् पूर्वोक्ते, व्यङ्ग्यव्यञ्जकभावे व्यञ्जनत्वात्मके व्यापारे, विचित्रे वैचित्र्ययुक्ते, सम्भवत्यपि यद्यपि सम्भवति तथापि रसादिमये रसभावादिमये अर्थे एकस्मिन् कविः अवधानवान् स्यात् कविनावहितेन भाव्यमित्यर्थः॥५॥

इत्थम् एवंप्रकारेण ध्वनेः गुणीभूतव्यङ्ग्यस्य च समाश्रयात् समाश्रयणेन, प्रतिभागुणः कवेः प्रतिभारूपो गुणः यदि स्याद् वर्तेत चेत्, काव्यार्थविरामः काव्यार्थनां काव्यस्य शब्दसन्दर्भरूपस्य, अर्थानां आकाङ्क्षायोग्यतादिभिः न भवेदित्यर्थः॥६॥

शुद्धस्यापि व्यङ्ग्यार्थापेक्षाविरहितस्यापि वाच्यस्य केवलस्य अवस्थादेशकालादिविशेषैरपि अवस्थाविशेषेण, देशविशेषेण,

**अवस्थादिविभिन्नानां वाच्यानां विनिबन्धनम्।**
**भूम्नैव दृश्यते लक्ष्ये तत्तु भाति रसाश्रयात्॥८॥**

**रसभावादिसम्बद्धा यद्यौचित्यानुसारिणी।**
**अन्वीयते वस्तुगतिर्देशकालादिभेदिनी॥९॥**

**वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः।**
**निबद्धा या क्ष ायं नैति प्रकृतिर्जगतामिव॥१०॥**

**संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम्।**
**नैकरूपतया सर्वे ते मन्तव्या विपश्चिता॥११॥**

---

कालविशेषेण, आदिपदात् स्वरूपविशेषेणापि, स्वभावतः आनन्त्यमेव जायते॥७॥

अवस्थादिविभिन्नानाम् अवस्थादेशकालविशेषादिभेदेन भिन्नानां, वाच्यार्थनां निबन्धनम्। यदस्माभिः प्राक्पूर्वं प्रदर्शितम् उक्तम्। भूम्ना बाहूल्येन, लक्ष्ये दृश्यत एव। अतः तत्, अतः तत्, अपोहितुं, त्यक्तुं न शक्यम्। किन्तु तत् निबन्धनं, रसाश्रयात् रसादेराश्रयात् भाति प्रकाशते॥८॥

औचित्यानुसारिणी औचित्यानुसारेण प्रर्वतमाना, देशकालादिभेदिनी देशविशेषकालविशेषादिभेदवती, रसभावादिसम्बद्धा रसभावादिभिर्युक्ता, वस्तुगतिः यदि अन्वीयते अनुस्त्रियते, तत् तर्हि परिमितशक्तीनां परिमिता काव्यनिर्माणशक्तिर्येषां तादृशानाम्। अन्येषां कवीनां का गणना तैः कविभिर्वर्णितत्वादिति न ब्रूमः, किन्तु वाचस्पतिसहस्राणां सहस्रैरपि बहुभिर्बृहस्पतिभिरपि, यत्नतः निबद्धा सा वस्तुगतिः जगतां प्रकृतिरिव जगतो मूलकारणीभूता प्रकृतिरिव, क्षयं नैति न प्राप्नोति॥९,१०॥

सुमेधसां धीमतां, बाहुल्येन भूम्ना, संवादा सादृश्यानि, भवन्त्येव। मेधाविनां बुद्धयः संवादिन्य इति स्थितमेवेदम्। अतः विपश्चिता दोषज्ञेन, ते सर्वे एकरूपतया न मन्तव्याः। उपपादयति कथमिति

**संवादो ह्यन्यसादृश्यं यत् पुनः प्रतिबिम्बवत्।**
**आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम्॥१२॥**

**तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम्।**
**तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः॥१३॥**

**आत्मनोऽन्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि।**
**वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम्॥१४॥**

---

चेदिति। संवाद इति। संवादो हि, अन्यसादृश्यम्। तत् पुनः सादृश्यं, शरीरिणां देहिनां, प्रतिबिम्बवत्, ओलख्याकारवत्, तुल्यदेहिवच्चेति त्रिविधं भवति॥११॥

हि यतः, काव्यार्थस्य अन्येन काव्यवस्तुना यत् सादृश्यं, स एव संवाद इत्युच्यते। तत् पुनः सादृश्यं शरीरिणां प्रतिबिम्बवदालेख्य-कारवत्, तुल्यदेहिवच्च त्रिधा व्यवस्थितम्। किञ्चित् काव्यवस्तु वस्त्वन्तरस्य शरीरिणः प्रतिबिम्बात्मकम्। अन्यद् आलेख्यप्रख्यं, अन्यत् तुल्येन देहिना तुल्यम्॥१२॥

तत्र पूर्वम् आद्यं प्रतिबिम्बरूपम् अनन्यात्म अनन्य आत्मा स्वरूपं यस्य तत्। तदनन्तरं तुच्छात्म तुच्छः आत्मा यस्य तादृशम्। तृतीयं प्रसिद्धात्म प्रसिद्ध आत्मा–यस्य तत्। अतः सर्वथा अर्थसाम्यं कविः न त्यजेत् नोपेक्षेत॥१३॥

शशिच्छायं शशिनश्चन्द्रस्य, छायेव ( शोभेव ) छाया ( शोभा ) यस्य तादृशं, पूर्वस्थित्यनुयाय्यपि पूर्वमेव चन्द्रतुल्यमपि, अन्यस्य अवयवसमुदायादन्यस्य, आत्मनः लावण्यरूपस्य सारभूतस्य वस्तुनः, सद्भावे योगे सति, तन्व्याः कृशाङ्ग्याः आननं वदनमिव, पूर्वस्थित्यनुयाय्यपि आत्मनः प्रतीयमानार्थवत्त्वस्य, सद्भावे भातितरां अतिशयेन शोभते॥१४॥

**अक्षरादिरचनेव योज्यते, तत्र वस्तुरचना पुरातनी।**
**नूतने स्फुरति काव्यवस्तुनि, व्यक्तमेव खलु सा न दुष्यति॥१५॥**
**यदपि तदपि रम्यं तत्र लोकस्य किञ्चित्**
**स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते।**
**अनुगतमपि पूर्वच्छायया वस्तु तादृक्**
**सुकविरुपनिबध्नन्निन्द्यतां नोपयाति॥१६॥**

**प्रतायन्तां वाचो निमितविविधार्थामृतरसा**
**न सादः कर्तव्यः कविभिरनवद्ये स्वविषये।**
**परस्वादानेच्छाविरतमनसो वस्तु सुकवेः**
**सरस्वत्येवैषा घटयति यथेष्टं भगवती॥१७॥**

*इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके*
*चतुर्थ उद्द्योतः ( कारिकाभागः )*

---

नूतने नवीने, काव्यवस्तुनि काव्यार्थे, स्फुरति प्रकाशमाने, यस्मिन् काव्ये, अक्षरादिरचनेव अक्षराणां पदानां च रचनैव, पुरातनी वस्तुरचना प्राचीनकविनिबद्धा पदार्थरचना, योज्यते आयोज्यते, सा रचना व्यक्तमेव न दुष्यति खलु॥१५॥

तत्र काव्यार्थे लोकस्य सहृदयलोकस्य। स्फुरितं स्फुरणं इदमिति एतदिति, इयमेतादृशी, बुद्धिर्ज्ञानम्, यदपि अभ्युज्जिहीते उदेति, तदपि किञ्चिदपि, रम्यं रमणीयम्, वस्तु अर्थतत्त्वम्, पूर्वच्छायया पुरातनकविनिबद्धार्थसंवादेन, अनुगतमपि युक्तमपि, तादृग् वस्तु, निबध्नन् कविः निन्द्यतां नोपयाति न प्राप्नोति॥१६॥

निमितानां पूर्वैः प्रयुक्तानामेव पदानां विविधा येऽर्थाः तेषाम् अमृतमिव सुधेव रसः यासु तादृश्यः वाचः काव्यरूपाः शब्दसन्दर्भाः प्रतायन्तां विस्तार्यन्ताम्। अनवद्ये निर्दोषे, स्वविषये स्वप्रतिभाविषये। कविभिः वादः विवादः न कर्तव्यः॥१७॥

*इति ध्वन्यालोकान्तर्गतकारिकार्थद्योतनिका व्याख्या समाप्ता।*

परिशिष्टम् - २

# ध्वन्यालोकस्य वृत्तिभागे पठिताः अन्ये श्लोकाः

## (प्रथम उद्द्योतः)

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः।**
**त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः।**

---

स्वेच्छा न तु परप्रेरणा। तया केसरिणः केसरिरूपं धृतवतः। प्रपन्नानां शरणमुपेयुषां प्रह्लादादीनाम् आर्तिं पीडां तद्धेतुनिराकरणेन नाशयतः। यद्वा, आर्तित्वेनाध्यवसितं हिरण्यकशिपुँ च्छिन्दतः। शरण्यं भगवन्तं ये शरणं प्रपन्नास्तेषां प्रह्लादादीनां तद्वैरिणो हिरण्यकशिपोर्निग्रहद्वारा पीडापनोदनं निर्व्यूढवानिति तदुचितस्य केसरिरूपस्य परिग्रहोऽप्युपपन्नो भवति। मधुरिपोः हरेः। स्वच्छया निर्मलया, स्वस्यछायया कान्त्या। "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इति नानार्थकोशः। आयासितः खेदितः इन्दुर्यैस्ते तथाविधाः। आयासित इत्ययं सादृश्यलक्षकः शब्दः। बालचन्द्रातिशायि वक्रहृद्यत्वादि च व्यज्यते। नखा नखराः। वो युष्मान् व्याख्यातॄन् श्रोतॄंश्च त्रायन्तां रक्षन्तु। अत्र नखानां रक्षाकर्तृत्वोपन्यासेन प्रपन्नार्तिहरस्य नृहरेस्तदितरप्रहरणानपेक्षयानायासेन दीनजनसंरक्षणदक्षता सूच्यते। प्रपन्नशब्देन कर्माकाङ्क्षया हरेः कर्मत्वेन भानम्।

अत्र भगवन्नृसिंहगतः प्रपन्नार्तिपरिहारद्वारा तत्संरक्षणविषयक उत्साहो वीररसध्वनि-व्यपदेशहेतुः। अत एव वीररसानुगुणैर्वर्णैरोजोगुणः, दीर्घसमासरूपा सङ्घटनापि।

**व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः।**
**वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः॥**

**व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।**
**समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः॥**

**व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।**
**न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते॥**

**तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।**
**ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः॥**

---

व्यङ्ग्यः अर्थः, व्यञ्जकस्तद्बोधकः शब्दः, तयोः सम्बन्धः व्यञ्जकत्वं व्यञ्जनात्मकः, तन्निबन्धनतया तदधीनप्रतिपत्तिजनकत्वेन स्थितस्य ध्वनेः व्यङ्ग्यार्थस्य, वाच्यवाचकचारुत्वहेतुषु वाच्यस्य वाचकस्य वा यत् चारुत्वं कामनीयकं तस्य हेतुषु अलङ्कारेषु, अन्तःपातिता अन्तर्गतत्वं कुतः कस्माद् भवतीति शेषः।

व्यङ्ग्यस्येति। यत्र यस्मिन् स्थले, वाच्यमात्रानुयायिनः वाच्यमभिधेयमर्थमेवोपस्कुर्वतः, व्यङ्ग्यस्य व्यञ्जनाव्यापारगम्यस्यार्थस्य, अप्राधान्यं वाच्यातिशायिचमत्कृत्यजनकत्वेन प्राधान्याभावः, तत्र तस्मिन् स्थले समासोक्त्यादयः समासोक्तिप्रभृतयः, वाच्यालङ्कृतयः स्फुटाः। वाच्यार्थोपस्कारकत्वरूपं वाच्यालङ्कारत्वं स्फुटं भजन्ते। व्यङ्ग्यस्य प्रतीयमानस्यार्थस्य, प्रतिभामात्रे अस्फुटतया प्रतीतौ स्फुटप्रतीतिरहित-तायामपि, वाच्यार्थानुगमेऽपि वा वाच्यमर्थमुपस्कुर्वाणेऽपि वा, तस्य प्रतीतमानस्यार्थस्य प्राधान्यं स्फुटप्रतीतिविषयत्वेन मुख्यत्वं, यत्र वा न प्रतीयते यत्र न बोध्यते तत्र न ध्वनिः तस्य समासोक्त्यादेर्ध्वनित्वं नाङ्गीक्रियते॥३-४॥

यत्र शब्दशक्तिमूले अर्थशक्तिमूले च ध्वनौ ( काव्ये ) शब्दार्थौ शब्दश्चार्थश्च, तत्परावेव व्यङ्ग्यार्थपरावेव यत्र शब्दशक्तिमूलध्वनौ

( द्वितीय उद्द्योतः )

रसभावादितात्पर्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्।।

रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित्।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः।।

---

व्यङ्ग्यार्थबोधतात्पर्येण प्रयुक्तः शब्दः स्वबोध्यं वाच्यमर्थमुपसर्जनीकृत्य व्यङ्ग्यार्थानुगुण्येनावतिष्ठते सः, यत्र अर्थशक्तिमूलध्वनौ शब्दबोध्योऽर्थः स्वयमुपसर्जनीभूय व्यङ्ग्यार्थान्तरानुगुण्येन स्थितः स च सङ्करोज्झितः सङ्करेणालङ्कारान्तरसमावेशेन रहितश्चेत् स एव ध्वनेर्विषयः तादृश एव ध्वनिव्यपदेशमर्हति।।

रसेति। रसभावादितात्पर्यं रसभावादीनां प्रधानवाक्यार्थत्वम्, आश्रित्यावलम्ब्य, विनिवेशनं समावेशः, सर्वासामलङ्कृतीनाम् अलङ्काराणां सर्वेषामपि, अलङ्कारत्वसाधनमलङ्कारत्वस्यालङ्कारपदव्यपदेशविषयतायाः कारणम्। अयमर्थः—अलङ्क्रियतेऽनेनति करणव्युत्पत्त्या अलङ्कारशब्दः यं कमप्यर्थमलङ्कुर्वाणोऽलङ्कारत्वं न भजते। किन्तु यत्र रसभावादयः प्रधानवाक्यार्थीभूताः तेषामलङ्करणेनैवालङ्कारत्वम् उपमादीनामित्याशयः। यत्र तूपमादयो वाच्यमेव प्रधानमर्थमुपकुर्वन्ति तत्रापि विभावत्वादीनां केवलान्वयितया व्यङ्ग्यार्थावबोधनस्वरूपयोग्यतावत्त्वेन वाच्यस्याप्यर्थस्य रसभावादितात्पर्यमविरुद्धम्।।

महाकवेः महत् काव्यं रचयितुमुद्युक्तस्य, रसवन्ति प्रतिपाद्यतया रसयुक्तानि, सालङ्काराणि अलङ्कारसहितानि च, कानिचित् कतिपयानि, वस्तूनि काव्यजातानि, एकेनैव यत्नेन एकरूपेणैव प्रयत्नेन, निर्वर्त्यन्ते निष्पन्नानि भवन्ति। अस्य कवेः, यमकादिनिबन्धे तु यकमादीनामलङ्काराणां ग्रथने तु, पृथक् यत्नः, पृथग्भूतो यत्नः, जायते आवश्यको भवतीत्यर्थः। शक्तस्यापि निबन्धनानुकूल-

**यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते।**
**शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते॥**

**रसाभासाङ्गभावस्तु यमकादेर्न वार्यते।**
**ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते॥**

(तृतीय उद्द्योतः)

**अनिष्टस्य श्रुतिर्यद्वदापादयति दुष्टताम्।**
**श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणम्॥**

**पदानां स्मारकत्वेऽपि पदमात्रावभासिनः।**
**तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता॥**

**विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी।**
**पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥**

---

शक्तिमतोऽपि कवेः, एषां यमकादीनामलङ्काराणां, रसे शृङ्गारादौ अङ्गत्वम् अङ्गभावः, न विद्यते नास्ति। तु किन्तु यमकादेरलङ्कारस्य, रसाभासाङ्गभावः रसाभासान् प्रति अङ्गत्वं न वार्यते न प्रतिषिध्यते। ध्वन्यात्मभूते शृङ्गारे प्राधान्येन प्रतीयमाने शृङ्गारे रसे तु अङ्गता अङ्गत्वं नोपपद्यते न युज्यत इत्यर्थः॥

श्रुतिदुष्टादिषु श्रुतिकट्वादिषु काव्यदोषेषु, अनिष्टस्य दुःश्रवस्य शब्दस्य, श्रुतिः श्रवणं, दुष्टतां दोषवत्त्वम्, आपादयति प्रापयति। तद्वत् तथा, इष्टश्रुतिः इष्टस्य अभिमतस्य अर्थस्य स्मृतिः उपस्थितिः, गुणं गुणवत्तां, व्यक्तं स्पष्टम्, आपादयति। पदानामिति। तेन हेतुना, पदानां सुप्तिङन्तानां स्मारकत्वेऽपि अर्थोपस्थिति-(स्मृति) मात्रजनकत्वेऽपि, पदमात्रावभासिनः पदमात्रेण अवभासिनः भासमानस्य प्रतीयमानस्येति यावत्। ध्वनेः ध्वनिकाव्यस्य प्रभेदेषु भेदेषु, सर्वेषु रम्यता चमत्कृत्याधायकत्वम्, अस्त्येव विद्यत एव। उपमानेन

**अव्युत्पत्तिकृतो दोषः शक्त्या सन्व्रियते कवेः।**
**यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते॥**

**अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।**
**प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा॥**

**कथाशरीरमुत्पाद्यवस्तु कार्यं यथा तथा।**
**यथा रसमयं सर्वमेव तत्प्रतिभासते॥**

**सन्ति सिद्धरसप्रख्या ये च रामायणादयः।**

---

द्रढयति—विच्छित्तीति। विच्छित्तिशोभिना विच्छित्त्या चमत्कारेण शोभनशीलेन एकेन भूषणेन अलङ्करणेन, कामिनीव प्रमदेव सुकवेः भारती वाणी, पदद्योत्येन पदव्यङ्ग्येन, ध्वनिना प्रतीयमानेनार्थेन भाति शोभते॥

अव्युत्पत्तिकृतः व्युत्पत्तिशून्यतायाः सञ्जातः दोषः कवेः शक्त्या प्रतिभया, संव्रियते आच्छाद्यते, तु किन्तु, यः अशक्तिकृतः शक्त्यभावात् प्रतिभाराहित्येन कृतः दोषः झटिति काव्यश्रवणसमय एव, अवभासते प्रतीयते॥

रसभङ्गस्य रसस्य शृङ्गारादेः भङ्गस्य, अनौचित्यादृते अनौचित्यभिन्नं, अन्यत् कारणं नास्ति। अनौचित्यमेव रसभङ्गस्य कारणमिति यावत्। प्रसिद्धौचित्यबन्धस्तु रामायणादौ प्रसिद्धम् औचित्यं तस्य वर्णनं तु रसस्य अर्थात् काव्यात्मतत्त्वस्य एव परा उपनिषत् अर्थात् परममुपादेयम्॥

उत्पाद्यवस्तु उत्पाद्यं कविकल्पितं वस्तु इतिवृत्तं यस्य तादृशं कथाशरीरं तथा तथा तेन तेन प्रकारेण, कार्यं कर्तव्यम्। यथा येन प्रकारेण, सर्वं तत् कथाशरीरं रसयमं रसात्मकं प्रतिभासते प्रकाशते॥

सिद्धाः परिपुष्टा रसा येषु तादृशाः, अत एव प्रख्याः

**कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी॥**

**मुख्या व्यापारविषयाः सुकवीनां रसादयः।**
**तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः॥**

**नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः।**
**स तेनाकविरेव स्यादन्येनास्मृतलक्षणः॥**

**पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः।**
**तान् समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा॥**

**वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः।**
**तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः॥**

---

प्रख्याताश्च, ये रामायणादयः, कथाश्रयाः कथामात्राश्रयभूताः, इतिहासाः, तैः सह रसविरोधिनी रसानां परस्परविरोधापादयित्री, स्वेच्छा न योज्या न योजनीया॥

सुकवीनां सत्कवीनां व्यापारविषयाः वर्णनविषयाः मुख्या ये रसादयः रसभावादयः तेषां निबन्धने तै; कविभिः सदैव सर्वदैव, अप्रमादिभिः अनवधानतारहितैः भाव्यम्। तु किन्तु यो नीरसः रसशून्यः प्रबन्धः प्रबन्धृव्यापारविषयः शब्दः स कवेः प्रबन्धुः महान् अपशब्दः, तेन, तेन हेतुना, स कविः, अन्येन केनापि अस्मृतलक्षणः अस्मृतमगृहीतं लक्षणं नामधेयं यस्य तादृशः अकविरेव स्याद् भवेत्॥

पूर्वे प्राचीनाः कालिदासादयः कवयः विशृङ्खलगिरः विशृङ्खला गीर्येषां तादृशाः क्वचित् स्खलनसम्भवेऽपि प्राप्तकीर्तयः प्राप्ता कीर्तिर्येषां तादृशा एव भवन्ति। तथापि तान् समाश्रित्य तान् प्रमाणीकृत्य, मनीषिणा धीमता, एषा नीतिः रसविरोधिपरिहारात्मिका, न त्याज्या नोपेक्षणीया। किं चास्माभिः प्रदर्शितोऽयं नयः, वाल्मीकिव्यासमुखाः वाल्मीकिव्यासादयः प्रख्याताः प्रसिद्धाः, ये कवीश्वराः तदभिप्रायबाह्यः

**विमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः।**
**ध्वनिसंज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम्॥**

**रसभावादिविषयविवक्षाविरहे सति।**
**अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥**

**रसादिषु विवक्षा तु स्यात् तात्पर्यवती यदा।**
**तदा नास्त्येव तत् काव्यं, ध्वनेर्यत्र न गोचरः॥**

**अपारे काव्यसंसारे कविरेकः प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्त्तते॥**

**शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।**
**स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥**

**भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।**
**व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया॥**

---

अयं तदभिप्रायाविषयः नयः न; तेषामपि कवीश्वराणाम् अभिमतोऽयं न्याय एवास्माभिरपि स्वीकृत इत्यर्थः॥

मनीषिणां विदुषां, विमतिविषयः विमतीनां विप्रतिपत्तीनां विषयः, सततं सर्वदा, अविदितसतत्त्वः अविदितं सविज्ञातं सतत्त्वं समानं यस्य (ध्वनेः) तादृशः, ध्वनिसंज्ञितः ध्वनिनामा काव्यस्य प्रकारः काव्यभेदः यः, सोऽयं एतावता प्रबन्धेन प्रकाशित इत्यर्थः॥

अपारे महति, काव्यसंसारे काव्यात्मके प्रपञ्चे प्रजापतिः विधाता, कविः एकः कविरेव इत्यर्थः। अस्मै कवये, यथा रोचते कविर्येन प्रकारेणेच्छति तेन प्रकारेण इदं विश्व सर्वं जगत् परिवर्त्तते परिवृत्तिं प्राप्नोति। कविः शृङ्गारी चेत् शृङ्गारसानुकूलभावनासम्पन्नो यदि, तर्हि काव्ये तन्निर्मिते जगति सर्वं रसमयं जातम्। जायत इति

**यस्मिन् रसो वा भावो वा तात्पर्येण प्रकाशते।**
**संवृत्त्याभिहितं वस्तु यत्रालङ्कार एव वा॥**

**काव्याध्वनि ध्वनिर्व्यङ्ग्यप्राधान्यैकनिबन्धनः।**
**सर्वत्र तत्र विषयो ज्ञेयः सहृदयैर्जनैः॥**

**अनाख्येयांशभासित्वं विविच्यार्थतया ध्वनेः।**
**न लक्षणं, लक्षणं तु साधीयोऽस्य यथोदितम्॥**

---

यावत्। स एव कविः वीतरागश्चेत् यदि वैराग्यसंपन्नं सर्वमेव तद् जगत् नीरसमेव रसशून्यमेव स्यात्। सुकविः, काव्ये स्वतन्त्रतया स्वातन्त्र्येण, अचेतनानपि भावान् चेतनवत्, चेतनान् भावान् अचेतनवच्च यथेष्टं व्यवहारयति॥

रसभावादिविषयकं यत् तात्पर्यं तस्य विरहे सति, यः अलङ्कारनिबन्धः यदलङ्कारस्य निबन्धनम्। स चित्रकाव्यस्य विषय इति सम्मतः। यदा तु रसादिषु तात्पर्यवती विवक्षा तत्परत्वेन विवक्षा स्यात् तदा, यत्र काव्ये, सोऽलङ्कारनिबन्धः ध्वनेर्न गोचरः ध्वनिविषयो न भवति, तत् तादृशं काव्यं, नास्त्येव॥

यस्मिन् काव्याध्वनि, रसो रत्यादिः, भावो वा निर्वेदादिर्वा तात्पर्येण वक्तृविवक्षया प्रकाशितौ, वा अथवा, वस्तु अलङ्कारश्च व्यङ्ग्यौ संवृत्याभिहितौ प्रकारान्तरेणाभिहितौ, तस्मिन् काव्याध्वनि, व्यङ्ग्यप्राधान्यैकनिबन्धनः व्यङ्ग्यस्य प्रतीयमानस्यार्थस्य प्राधान्यमेव एकं मुख्यं निबन्धनं यस्य तादृशः ध्वनिः, तत्र सर्वत्र तादृशे सर्वस्मिन्नपि काव्ये सहृदयैर्जनैः, विषयी विषयित्वेन ज्ञेयः अवगन्तव्यः।

ध्वनेर्निर्वाच्यतया निर्वाच्यः निर्वक्तुं शक्यः अर्थः यस्य तादृशस्य भावस्तत्ता तया। अनाख्येयांशभासित्वम् अनाख्येयस्यानिर्वचनीयस्यांशस्यावभासनात्मकम् अनिर्वचनीयत्वं न लक्षणं भवति। तु किन्तु अस्य ध्वनेः यथोदितं यथास्माभिरुक्तं तदेव साधीयः॥

(चतुर्थ उद्द्योतः)

वाल्मीकिव्यतिरिक्तस्य यद्येकस्यापि कस्यचित्।
इष्यते प्रतिभार्थेषु तत्तदानन्त्यमक्षयम्॥

इत्यक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतो ।
यस्माद्वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते॥
काव्याख्येऽखिलसौख्यधाम्नि विबुधोद्याने ध्वनिर्दर्शितः।
सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम्॥

सत्काव्यतत्त्वनयवर्त्म, चिरप्रसुप्त–
कल्पं मनःसु परिपक्वधियां यदासीत्।
तद् व्याकरोत् सहृदयोदयलाभहेतो–
रानन्दवर्धन इति प्रथिताभिधानः॥

---

वाल्मीकिव्यतिरिक्तस्य वाल्मीकिभिन्नस्य, कस्यचिदेकस्यापि अर्थेषु विशेषरूपेण प्रतिभा यदि इष्यते यद्यनुमन्यते, तत् तर्हि, तदानन्त्यमर्थानन्त्यम् अक्षयमनश्वरम्॥

इति उक्तप्रकारेण। अक्लिष्टस्य रसस्य आश्रयो यः शब्दसन्दर्भः तस्योचितानां गुणानामलङ्काराणां च शोभां बिभर्तीति तादृशात्। यस्मात् काव्यात् सुकृतिभिः पुण्यवद्भिः समीहितमीप्सितं सर्वं वस्तु समासाद्यते। तस्मिन् काव्याख्ये काव्याभिधे, अखिलसौख्यधाम्नि अखिलानां सर्वेषां सौख्यानामाश्रये, विबुधोद्याने नन्दने, ध्वनिर्दर्शितः प्रकाशितः। सोऽयं कल्पतरूपमानमहिमा कल्पतरुः कल्पवृक्षः उपमानं यस्य तादृशो महिमा माहात्म्यं यस्य तादृशः ध्वनिः भव्यात्मनां सुकृतिनां योग्यः आस्वादनविषयः भवतु॥

यत् सत्काव्यतत्त्वर्नयवर्त्म सतः काव्यस्य यत् तत्त्वं प्रतीयमानार्थवत्त्वरूपं वस्तु नयवर्त्म नयनमार्गः, परिपक्वधियां परिणतबुद्धीनां, मनस्सु हृदयेषु, चिरप्रसुप्तकल्पं चिरं चिराय प्रसुप्तमिव,

आसीद् अभूत। तत् सत्काव्यतत्त्वनयवर्त्म, आनन्दवर्धन इति प्रथिताभिधानः प्रथितं यस्य तादृशः। सहृदयोदयलाभहेतोः सहृदयानाम् उदयस्याभ्युदयस्य लाभाय सहृदयमनःप्रीतये व्याकरोत् व्याख्यातवान्॥

## परिशिष्टम् - ३

# सन्दर्भग्रन्थसूची


**मौलिकग्रन्थाः**

अथर्ववेदः – चौखम्बासंस्करणम्

अभिज्ञानशाकुन्तलम् – चौखम्बाविद्याभवन, १९७३

अभिधावृत्तमातृका – चौखम्बासंस्करणम्

अभिनयदर्पणः – सं, मनमोहनघोषः,द्वितीयं संस्करणम्

अभिनवभारती – बड़ौदासंस्करणम्

अभिनव रससिद्धान्त – विश्वविद्यालय प्रकाशन, वाराणस, १९७३

अलङ्कारकौस्तुभः – कविकर्णपूरः, राजशाही, १९२६

अलङ्कारकौस्तुभः – विश्वेश्वरः, काव्यमालासंस्करणम्

अलङ्कारमहोदधिः – नरेन्द्रप्रभसूरिः, बड़ौदासंस्करणम्, १८४२

अलङ्कारसर्वस्वम् – रुय्यकः निर्णयसागरसंस्करणम्, भारतीयविद्याप्रकाशन, १९८२

अष्टाध्यायी – चौखम्बा ओरियण्टालिया, १९८१

औचित्यविचारचर्चा – चौखम्बासंस्करणम्

उत्तररामचरितम् – रामनारायणबेनीप्रसाद, इलाहाबाद, १९८२

ऋग्वेदः – चौखम्बासंस्करणम्, १९८०

कर्णसुन्दरी – विह्लण, निर्णयसागरसंस्करणम्, १८८८

कविकण्ठाभरणम् – मोतीलालबनारसीदास, १९६७

| | | |
|---|---|---|
| कालिदासग्रन्थावली | – | डा. रेवाप्रसादद्विवेदी, का.हि.वि.वि., १८८६ |
| काव्यादर्शः | – | मेहरचन्दलछमनदास, दिल्ली १९७३ |
| काव्यानुशासनविवेकः | – | वाग्भटः |
| काव्यप्रकाशः | – | बालबोधिनीटीका, भण्डारकरप्राच्य–विद्यासंशोधनमन्दिरसंस्करणम् १९६५ |
| काव्यमीमांसा | – | बड़ौदासंस्करणम्, १९४२ |
| काव्यमीमांसा | – | विहारराष्ट्रभाषापरिषद्, पटना, १९६५ |
| काव्यालङ्कारः | – | रुद्रटः, निर्णयसागरसंस्करणम्, मोतीलालबनारसीदास, १९८३ |
| काव्यालङ्कारकारिका | – | डा० रेवाप्रसादद्विवेदी, चौखम्बा संस्करणं, १९७७ |
| काव्यालङ्कारसारसंग्रहः | – | उद्भटः, बड़ौदासंस्करणम् |
| काव्यालङ्कारसारसग्रंह एवं लघुवृत्ति की व्याख्या | | हिन्दी साहित्य सम्मेलन प्रयाग, १९६६ |
| काव्यालङ्कारसूत्राणि | – | वामनः, मोतीलाल बनारसीदास, १९८३ |
| चन्द्रालोकः | – | चौखम्बासुरभारतीप्रकाशनम्, १९७७ |
| चित्रमीमांसा | – | वाणी विहार वाराणसी, १९६५ |
| दशरूपकम् | – | डा० रामजीउपाध्यायः, चौखम्भासंस्कृतसीरीज़, १९३७ |
| ध्वन्यालोकः | – | चौखम्बासंस्करणम्, १९६१ |
| ध्वन्यालोकः | – | ध्वन्यालोकोज्जीवनी, केरलविश्वविद्यालय १९८१ |
| नवसाहसाङ्कचरितम् | – | चौखम्बासंस्करणम् |

| | | |
|---|---|---|
| नाटकलक्षणरत्नकोषः | – | सागरनन्दी, चौखम्बासंस्करणम्,१९७२ |
| नाट्यदर्पणम् | – | बड़ौदासंस्करणम्, १९२९ |
| नाट्यदर्यण | – | साहित्यभण्डार, मेरठ, |
| नाट्यशास्त्रम् | – | काशीसंस्करणम् |
| निरुक्तम् | – | चौखम्बासंस्करणम् |
| बालरामायणम् | – | चौखम्बासुरभारतीप्रकाशनम्, १९८४ |
| बालभारतम् | – | निर्णयसागरप्रेससंस्करणम् |
| बालभारतम् | – | चौखम्बासंस्करणम्, १९८९ |
| भर्तृहरिशतकम् | – | निर्णयसागरप्रेससंस्करणम् |
| भावप्रकाशनम् | – | बड़ौदासंस्करणम् |
| महाभारतम् | – | नागपब्लिशर्स, १९८८ |
| महावीरचरितम् | – | चौखम्बा विद्याभवन, वाराणसी, १९६८ |
| मालतीमाधवम् | – | चौखम्बासंस्करणम्, १९७१ |
| याज्ञवल्क्यस्मृतिः | – | निर्णयसागरप्रेससंस्करणम्, मोतीलाबनारसीदास १९८३ |
| रत्नावली | – | चौखम्बासुरभारतीप्रकाशनम्, १९८१ |
| रसगङ्गाधरः | – | निर्णयसागरप्रेससंस्करणम् |
| रसनिष्पतितत्त्वालोकः | – | पं. भागवतप्रसादत्रिपाठी, संस्कृतविद्यापीठ, पुरी |
| राजतरङ्गिणी | – | चौखम्बासंस्करणम् |
| राजशेखररूपकावली | – | अमरग्रन्थपब्लिकेशन्स, |
| वक्रोक्तिजीवितम् | – | चौखम्बासंस्कृतसंस्थानम् १९८० |

| | | |
|---|---|---|
| विक्रमाङ्कदेवचरितम् | – | चौखम्बासंस्करणम् |
| विद्धशालभञ्जिका | – | चौखम्बाविद्याभवन, १९६५ |
| व्यक्तिविवेक: | – | चौखम्बासंस्कृतसंस्थान, १९८२ |
| सरस्वतीकण्ठाभरणम् | – | निर्णयसागरप्रेससंस्करणम् |
| साहित्यदर्पण: | – | निर्णयसागरप्रेससंस्करणम् |
| सुक्तिमुक्तावली | – | चौखम्बासंस्करणम् |
| शाङ्र्गधरपद्धति: | – | चौखम्बासंस्करणम् |
| शुक्लयजुर्वेद: | – | चौखम्बासंस्करणम् |
| श्लोकवार्तिकम् | – | चौखम्बासंस्करणम् |
| शृङ्गारप्रकाश: | – | इन्दिरागाँधीकलाकेन्द्र, न. दि. २००७ |

**समीक्षातमकग्रन्था:**

| | | |
|---|---|---|
| आचार्य बलदेवोपध्याय | – | संस्कृत शास्त्रों का इतिहास, १९६९<br>संस्कृत साहित्य का इतिहास, १९७८<br>संस्कृत सुकवि समीक्षा<br>चौखम्भाविद्याभवन, १९८७ |
| आशा वर्मा | – | राजेशेखर, म.प्र.हि. अ., १९७१ |
| ए.वी.कीथ् | – | संस्कृत ड्रामा, अक्सफोर्ड, १९५४ |
| कीलहार्न एफ, | – | एपिग्रापिका इण्डिका, १८८९ |
| गङ्गानाथ झा | – | कविरहस्य, इलाहाबाद, १९५० |
| गणेशत्र्यम्बक देशपाण्डे | – | भारतीय साहित्यशास्त्र, बम्बई, १९६० |
| कृष्णमाचारी एन्. | – | द हिस्ट्री आफ् क्लासिकल संस्कृत लिटरेचर, १९७३ |

